मुखप्रतिमुखोपेतं चतुरश्रपदक्रमम् ।
श्लिष्टभावरसोपेतं वैचित्र्यार्थं द्विमूढके ॥१३३॥
उत्तमोत्तमकं विद्यादनेकरससंश्रयम् ।
विचित्रैः श्लोकबन्धैश्च हेलाहावविचित्रितम् ॥१३४॥

---

मुखप्रतिमुखोपेतं तथा चाचपुटाश्रयम् ।
यथाक्षरैः सन्निपातैस्तथा द्वादशभिर्युतम् ॥ इति ।

तस्मादङ्गाङ्गपरिक्रमे यदेव तालानुसरणं चतुर्षु च मुखेषु गतिपरिसमापनं लोके गत्यादावपरिदृष्टमपि नटसामाजिकवर्गसविधाध्यासनेन साम्याङ्गस्यानन्दस्वभावतया रसांशेतराङ्गत्वादतिशयेन रसोपयोगीति तत् स्वीकृतम् ।

मुखं यदग्रे सामाजिकाः प्रतिमुख्यस्ततोऽन्या दिशो लास्याङ्गं नेतुम्, मुखप्रतिमुखे गीतकाङ्गत्वेन हि । (चतुरश्रेति) चतुरश्रं कृत्वा क्रान्तदिक्चतुष्टयैः पदैः क्रमणं यत्रेति । किमेवं सति भवतीत्याह वैचित्र्यार्थं वैचित्र्यमत्र प्रयोजनमिति । तेनापि किमिति चेत्तत आह (श्लिष्टभावेति) श्लिष्टभावेन सर्वसाम्यलक्षणेन चित्तवृत्तिसंघट्टेन रसानामुपगतं स्फुटत्वं येनेति ।

गीतकाङ्गाभ्यां मुखप्रतिमुखाभ्यामङ्गसौष्ठवेन रसभावैर्नायिकाद्वयरचनया च युतमिति श्रीशङ्कुकाद्याः, तच्च प्रागेव परीक्षितम् ।

मुखप्रतिमुखौ सन्धी इत्येतदपि न समीचीनं, अनुपयोगादस्यार्थस्येत्युपाध्यायमतमेवानवद्यमावेदितपूर्वं ग्राह्यम् ।

अथोत्तमोत्तमकमङ्गं नाट्यं उपयोजयितुमाह—**उत्तमोत्तमकं विद्यादनेकरससंश्रयमित्यादि** । "उत्तमोत्तमके त्वादौ नर्कुटं संप्रयोजयेत्" इत्यादिना "हेलाहावविभूषित" मित्यन्तेन लास्याङ्गं लक्षयिष्यते (३१-अ) । तत्र च चित्तवृत्तिपरिपोषो हेलाहावादिचेष्टालङ्कारमुखेन यः स्थितः सोऽत्र लौकिकः सन्नुपजीव्यते । न हि भगवदवतारस्य रामस्य कुलकलत्रमनुपेक्ष्यं, पराभवखलीकारश्च न सोढव्यः, क्षत्रियेण च लोककण्टकाभ्युद्धरणं कर्तव्यमिति यच्छास्त्रार्थपरिपालनं मुक्त्वा, रावणहृतसीतासमानयनाद्युचितं निमित्तं, परमार्थतो न तु यथा प्रतिरूपं "मुहुर्व्याधूतास्तादृश" मित्यादि वर्ण्यते तथास्य तृतीयत्रेतावतीर्णस्य (रामस्य) संभाव्यते । रामायणेऽपि मुनिना तथा वर्णितमिति

**कोपप्रसादजनितं साधिक्षेपपदाश्रयम् ।**

**उक्तप्रत्युक्तमेवं स्याच्चित्रगीतार्थयोजितम् ॥१३५॥**

---

चेत् किमतो वेदेऽपि हि तथा वर्ण्यतां, न वयमतो विभीमः । स हि भागः काव्यं यश्च यश्च रसाभिनिष्यन्दी वर्ण्य इत्युक्तमसकृत् । ततश्चान्यतररञ्जनोपक्रमविनेयहृदयसंवादिवैचित्र्यांशोऽसौ नाट्ये लास्याङ्गप्रसादोपनत एव । उत्तमानि तावल्लास्याङ्गानि, तेभ्योऽपीदमुत्तमं, सर्वं हि रसपर्यायीति दर्शितं प्राक् । ततः संज्ञायां कन् ।

अनेकस्यासाधारणस्य रसस्य संश्रयोऽस्मिन्निति, स्थायिनां बहुत्वनूतनत्वाद् घटनाविचित्रत्वमुक्तम् । श्लोके च बध्यत इति श्लोकबन्धः, (बन्धानां) विधास्तैः विविधैः (चित्रैः) परमार्थताभूतैः क्वचित्कदाचित्संभवमात्रं तथा वर्णितैर्युक्तम्, यथा (विक्रमोर्वश्यां)—"आ दुरात्मन् रक्षः, क्व नु खलु मे प्रियतमामादाय गच्छसि । (विभाव्य) नवजलधरः सन्नद्धोऽयं"* इत्यादि पुरूरवस उक्तिश्चानुरागेणैव व्याख्यातेति किं पुनरुक्त्या ।

हेलाहावैर्विशेषेण दीप्तागमनरूपेण भूषितमिति सात्त्विकाद्यनुभाववर्गस्य सर्वस्यादीप्ततोपलक्षिता—

तत्राक्षिभ्रूविकाराद्यः शृङ्गाराकारसंयुतः ।

सग्रीवारेचको ज्ञेयो भावस्थितसमुत्थितः ।

स एव हावः सा हेला ललिताभिनयात्मिका । (अ-२२)

इति हेलाहावयोर्लक्षणम् ।

अथान्त्यमङ्गं नाट्योपयोगि कर्तुमाह—**कोपप्रसादजनितमित्यादि** । प्रथमार्धेन भाविलक्षणमेकदेशद्वारेणानूद्यते, द्वितीयेन तत आकृष्य वैचित्र्यभागो नाट्योपयोगी कथ्यते । तदयमर्थः—कोपप्रसादजनितं साधिक्षेपपदाश्रयं चेत्यादिरूपं यदुक्तं प्रत्युक्तं तथास्यगाने (अ-३१) वक्ष्यते, नाट्ये एवमिति समनन्तरमेवं वक्ष्यमाणेन पथिना स्यात्, तमाह **चित्रेति** । चित्रं यद्गीतं

नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः

सुरधनुरिदं दूराकृष्टं न नाम शरासनम् ।

यत्र प्रियाकृतिं दृष्ट्वा विनोदयति मानसम् ।

मदनानल तप्ताङ्गी तच्चित्रपदमुच्यते ।।१३६।।

---

अयमपि पटुर्धारासारो न बाणपरम्परा

कनकनिकषस्निग्धा विद्युत् प्रिया न ममोर्वशी ।।(४-१)।।

ध्रुवागानकाव्यं तस्य योऽर्थस्तेन संयोजनं यस्मिन्नाट्यांशे उक्तप्रत्युक्ते हि (वैचित्र्यं) लास्याङ्गात् स्वीकृतम् । यथा "बाले नाथ विमुञ्च मानिनि रुषम्*" इत्यादौ भिन्नानां वाच्यखण्डलकानां समन्वयो रसावेशमहिम्नैव, न तु श्रुतिलिङ्गादिप्रमाणषट्कं तदन्यत्रावकाशं लभते "क्वाकार्यं शशलक्ष्मणः क्व च कुलं"** इत्यादावियमेव वार्ता । एवं "णलिनीदलणीसहमुत्तदेहिआ । अइदुल्लहपडिबंधाणुराइआ । (नलिनीदलनिस्सहमुक्तदेहा । अतिदुर्लभप्रतिबन्धानुरागा) ।।"

इत्यादेर्द्विपदिकागीतार्थस्याभिनये काव्यार्थस्य च "हिअअ समास्सस" (शाकु), इत्यादेरसावेशकृत एवाभिनयार्थसमावेशो लोकापरिदृष्ट उपरञ्जनाय सातिशयमुपयोगी रसावेशवैवश्यप्रसादादित्युक्ताप्रत्युक्ताल्लास्याङ्गादुपजीवितः ।

यद्यपि "स्थाने ध्रुवास्वभिनयो यः क्रियते" (३२-४७) इति नाट्यनिरूपणायां वक्ष्यते तथापि कविना तादृक्कार्यं प्रयोक्त्रा च तादृग्गीतं कर्तव्यमिति शिक्षणाय कुतश्चेदमङ्गमुपजीवितमिति शङ्काशमनाय रूपकाङ्गत्वेनेहास्याभिधानं, सामान्याभिनये त्वभिनयत्वेनास्य निरूपणं भविष्यति "षडात्मकस्तु शारीर" (२२-४०) इत्यत्र। कोपप्रसादजनितत्वमित्यनेन चित्तवृत्त्यावेशस्थानमस्याङ्गस्य निवेशविषय इत्युक्तम् । यत उक्तप्रत्युक्तमहिम्ना चाकाशभाषितात्मकमप्यलौकिकरूपं स्वीकुर्वता तत्सहचरं स्वगतजनान्तिकापवारितकाद्युपलक्षितम् । न च सर्वथा तन्नाशो लोके क्वचित् संभवन्नाट्येऽपीति गीयमानः स्यात्, अनेन श्रोतुः काकतालीयवशात् स्वचित्तवृत्त्यार्थसंवादो भवति । यथा हर्षचरिते भगवत्याः सरस्वत्याः †"तरलयसि दृशं

---

* अयं श्लोकः षोडशेऽध्याये आख्यानलक्षणस्य लक्ष्यतयोदाहृतः ।

** अयमपि षोडशेऽध्याये उपपत्तिलक्षण उदाहृतः ।

†तरलयसि दृशं किमुत्सुकामकलुषमानसवासलालिते ।

अवतर कलहंसि वापिकां पुनरसि यास्यसि पङ्कजालयम् ।। (उ-१)

दृष्ट्वा स्वप्ने प्रियं यत्र मदनानलतापिता ।
करोति विविधान् भावांस्तद्वै भाविकमुच्यते ।।१३७।।

---

समुत्सुका" मित्यपरवक्त्रं शृण्वन्त्याः । तत्सर्वं हि लोके यथा न स्यात् तर्हि प्रत्यक्षकल्पं कथमिव तत्र प्रतीतिरिति नाट्यरूपतैव भ्रंशेत ।

अन्ये तु चित्रपदं भाविकं चेत्यङ्गद्वयमाहुः पठन्ति च—

यत्र प्रियाकृतिं दृष्ट्वा विनोदयति मानसम् ।
मदनानलतप्ताङ्गी तच्चित्रपदमुच्यते ।।
दृष्ट्वा स्वप्ने प्रियं यत्र मदनानलतापिता ।
करोति विविधान् भावांस्तद्वैभाविकमुच्यते ।। इति ।

तच्चेदमसत्, "लास्ये दशविधं" (१९-१२०) इत्यत्रत्येन ग्रन्थेन, दशाङ्गं लास्य" मिति च तालाध्याये (३१) पठिष्यमाणेन विरोधात्, न चास्योपयोगः कश्चित् । तथा ह्यलौकिककैशिक्युपयोगि रसांशे सर्वथोपकारि यद्वैचित्र्यं तल्लास्याङ्गद्वारेणाह, स्वकार्यं तच्च सर्वं दशभिरेव संगृहीतम् । तथा हि—प्रधाने चित्तवृत्त्यंशे† वा वैचित्र्यं विभावाद्यंशे वा उपरञ्जकभावे वा । तत्र (चित्तवृत्त्यंशे प्रच्छेदकाद्‡) विभावांशगतं तु वैचित्र्यं, सैन्धवकात् काक्वाद्यंशे, स्थितपाठ्याल्लक्षणगुणाद्यंशे, त्रिमूढकादनुवृत्तांशे, पुष्पगण्डिकात आहार्ये उपरञ्जकगीतातोद्ययोजने च, सात्त्विके आसीनपाठ्यात्, उपरञ्जकभावेऽपि (निः)शब्दाद् ध्रुवागानभागे सर्वातोद्ययोगे च गेयपदात्, गीतार्थस्य पात्रे करुणार्थाभिनये उक्तप्रत्युक्ताद्वाचिकस्य, स्वरतालनुसरणा द्विमूढकात् तत एवाङ्गिकवैचित्र्यमपि, व्यभिचार्यंशे तु वैचित्र्यमुत्तमोत्तमकात् । एवं तदतिरिक्तो नास्त्येवांश इति च दशैवाङ्गानि । वाग्भागस्तनुत्वेनोपरञ्जकभागः स्वरसात्मनि हि तद्वैचित्र्ये भूयसा मुनिना निरूपणं कृतम् । अतएव चालौकिको वैचित्र्यांशः प्रत्युत्तरसे सातिशयोपयोग इतिशब्दतो मुनेरनुकारो, रसात्मा नाट्यमिति (इति)नाभिप्रेतमिति लक्ष्यते । अलौकिकवैचित्र्यसारो हि रसः, तथा चोक्तं भट्टतोतेन—

---

†चित्तवृत्त्यनुवृत्त्यंशे" इति स्यात्
‡तत्रानुत्तमोत्तमकात्

एतेषां लास्यविधौ विज्ञेयं लक्षणं प्रयोगज्ञैः ।

लक्षणालङ्कृतिगुणा दोषाः शब्दप्रवृत्तयः ।
वृत्तिसन्ध्यङ्गसंरम्भः संभारो यः कवेः किल ॥
अन्योन्यस्यानुकूल्येन संभूयैव समुत्थितैः ।
झटित्येव रसा यत्र व्यज्यन्ते ह्लादिभिर्गुणाः (णैः ?) ॥
वृत्तैः सरलवन्धैर्यत् स्निग्धैश्चूर्णपदैरपि ।
अश्लिष्टहृद्यघटनं भाषया सुप्रसिद्धया ॥
यच्चेदृक्काव्यमात्रं सद्रसभावानुभावकम् ।
सामान्याभिनये प्रोक्तं वाच्याभिनयसंज्ञया (अ-२२) ॥
एवंप्रकारं यत्किंचिद्वस्तुजातं (कथार्पितम्) ।
अनूनाधिकसामग्रीपरिणामोन्मिषद्रसम् ॥
*रसपोषाय तज्जाते नाट्यस्वयं स्वरो ।
प्रतिभायाः प्रगल्भायाः सर्वमोडुप एष सः ॥

इति भावनाप्राणनाया यल्लोके हि संभाव्यते परम् अथ (परमार्थं तत्? ।) वस्तुतो लोकोत्तरत्वेनैव संभारेण युक्ता कविवाणी हठादेव रसमयी भवति साधारणताप्राणत्वादिति तत्र तात्पर्यम् ।

ननु लास्याङ्गेभ्यो यो भागानुपजीवति स तावदिहोक्तः, तेषां तु स्वरूपं वक्तव्यमित्याशंक्याह एतेषां लास्यविधाविति ।एतद् दशरूपकलक्षणं कवीनां सुखग्रहणाय राशीकर्तुमाह पञ्चसन्धीत्यादि । नाटकमित्यभिनेय-काव्यमात्रम् । तत्र पञ्चसन्धीत्यादि संभवमात्रे मन्तव्यम् । महान्तो रसाः पुरुषार्थोपयोगिनः यत्र । महान् भोगो रञ्जनाप्रधानो रसो यत्र, आभोग

---

*रसपोषाय तज्जातं लोकान्नाट्यजगत्स्वयम् ।
प्रतिभायाः प्रगल्भायाः सर्वस्वं कविवेधसः ॥

इति भ्रष्टनष्टाक्षरप्रायस्यास्य श्लोकस्यायमभिप्रायः स्यात् (रामकृष्णकविः) ।

तदिहैव तु यन्नोक्तं प्रसङ्गविनिवृत्तहेतोस्तु ॥१३८॥
पञ्चसन्धि चतुर्वृत्ति चतुःषष्ट्यङ्गसंयुतम् ।
षट्त्रिंशल्लक्षणोपेतं गुणालङ्कारभूषितम् ॥१३९॥
महारसं महाभोगमुदात्तवचनान्वितम् ।
महापुरुषसंचारं साध्वाचार जनप्रियम् ॥१४०॥
सुश्लिष्टसन्धिसंयोगं[1] सुप्रयोगं सुखाश्रयम् ।
मृदुशब्दाभिधानं च कविः कुर्यात्तु नाटकम् ॥१४१॥
अवस्था या तु[2] लोकस्य सुखदुःखसमुद्भवा ।
नानापुरुषसंचारा नाटकेऽसौ विधीयते[3] ॥१४२॥
न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला ।
न तत् कर्म न वा[4] योगो नाट्येऽस्मिन्यन्न[5] दृश्यते ॥१४३॥

---

इत्यन्ये । उदात्तवचनान्वितमिति गुणान् श्लेषप्रसादादीन् स्वीकुरुते । सुश्लिष्टसन्धिसंयोगमिति सन्ध्यन्तराणि (च), सुप्रयोगमिति लास्याङ्गानि, सुखाश्रयमिति छन्दोवृत्तवैचित्र्यं, मृदुशब्दैरभिधानं वर्णना विवक्षितस्यार्थस्य यत्रेति माधुर्यप्रसादार्थव्यक्तिगुणानां प्रकर्षणं सूचयति । एवं नाटकं कुर्यात् । यश्च नाटकं कुर्यात् स एव कविः । किं तेनेत्याह अवस्था यात्विति ।

1. जादिवान्तेषु सामाद्येकविंशतिसन्ध्यन्तरानन्तरमर्थोपक्षेपकाः तेषामनन्तरं—"वृत्तिवृत्त्यङ्गसंपन्नं पताकार्थप्रतिक्रियम् (NS. पदार्थप्रकृतिक्षमम्) पञ्चावस्था समुत्पन्नं (अभिनिष्पन्नं) पञ्चभिः सन्धिभिर्युतय् । षट्त्रिंशल्लक्षणोपेतं......"इति वर्तते ।

---

1. KSS. सन्धियोगं च ।
2. NS. हि ।
3. KSS., NS. संभवेदिह ।
4. KSS., NS. योगोऽसौ
5. KSS., KS. नाटके यन्न ।

योऽयं[1] स्वभावो लोकस्य नानावस्थान्तरात्मकः ।
[2]सोऽङ्गाद्यभिनयैर्युक्तो नाट्यमित्यभिधीयते ॥१४४॥
देवतानामृषीणां च राज्ञां चोत्कृष्टमेधसाम्[3] ।
पूर्ववृत्तानुचरितं नाटकं नाम तद्भवेत् ॥१४५॥
यस्मात् [4]स्वभावं संत्यज्य[5] साङ्गोपाङ्गगतिक्रमैः ।
[6]प्रयुज्यते ज्ञायते च तस्माद्वै नाटकं स्मृतम् ॥१४६॥
सर्वभावैः सर्वरसैः सर्वकर्मप्रवृत्तिभिः ।
नानावस्थान्तरोपेतं नाटकं संविधीयते ॥१४७॥
[[7]अनेकशिल्पजातानि [8]नैककर्मक्रियाणि च ।
[9]तान्यशेषाणि रूपाणि कर्तव्यानि [10]प्रयोक्तृभिः ॥]१४८॥

---

नानापुरुषेषु सञ्चार एको भावानुप्रवेशो रसात्मना यस्याः सा तादृशी यतो नाटके विधीयते संपाद्यते रसरूपतां नीयत इत्यर्थः । उक्तं चैतद्वितत्य ।

ननु सर्वे चात्र किमवस्थाना इत्याशंक्य प्रथमाध्यायोक्तमेव श्लोकद्वयं पठति न तद्ज्ञानमिति, योऽयं स्वभावो लोकस्येति । एतच्च तत्रैव व्याख्यातमिति किं पुनरुक्तेन । पूर्ववृत्तानुचरितं कथं नाटकशब्दस्यार्थं इत्याह यस्मात्स्वभावं संतज्येति नट नताविति नमनं स्वभावत्यागेन प्रह्वीभावलक्षणं, ये त्वन्ये नट वृत्ताविति पठन्ति तन्मतेऽपीह नमनं, नटशब्दो जनिदाच्युसूत्रेण

---

1. KSS. यो य:
2. KSS. साङ्गाभिनयसंयुक्तो ।
3. KSS. लोकस्य चैव हि ।
4. NS. स्वभाव: ।
5. KSS., NS. संहृत्य ।
6. KSS., KS. अभिनीयते गम्यते च ।
7. KSS. यान्येव NS. यान्येक ।
8. KSS., NS. ह्येककर्मकृतानि च ।
9. KSS., NS. तानि शेषाणि।
10. NS. प्रयोज्यानि

लोकस्वभावं संप्रेक्ष्य नराणां च बलाबलम् ।
संभोगं चैव युक्ति च ततः कार्यं तु[1] नाटकम् ॥१४९॥
भविष्यति युगे प्रायो भविष्यन्त्यबुधा नराः ।
ये चापि हि भविष्यन्ति ते [2]यत्नश्रुतबुद्धयः ॥१५०॥
[3]कर्मशिल्पानि शास्त्राणि विचक्षणबलानि च ।
[4]सर्वाण्येतानि नश्यन्ति यदा लोकः प्रणश्यति ॥१५१॥
तदेवं लोकभाषाणां[5] प्रसमीक्ष्य बलाबलम् ।
मृदुशब्दं सुखार्थं च कविः कुर्यात्तु नाटकम् ॥१५२॥
चंक्रीडिताद्यैः शब्दैस्तु काव्यबन्धा भवन्ति ये ।
वेश्या इव न [6]ते भान्ति कमण्डलुधरैर्द्विजैः ॥१५३॥

---

(उणादि ४-११५) व्युत्पादितो गृहीतव्य इति दर्शयति साङ्गोपाङ्गा ये पदक्रमा गतिवैचित्र्याणि । एतच्च समस्तं नाट्याङ्गोपलक्षणं प्रयुज्यत इति नटैर्ज्ञायते चेति सामाजिकैस्तेनोभयोरपि नमनमुक्तमिति संभावनाकृतमौचित्यम् । मृदुशब्देति यदुक्तं तस्य प्रयोजनमाह भविष्यति त्रेतायुगापेक्षया द्वापरे कलौ वेत्यर्थः । सुखार्थमित्यर्थव्यक्तिः स्वीकृता । एतदुपसंहरन्नन्यदासूत्रयन्नध्यायमध्यायान्तरेण सङ्गमयति दशरूपविधानं चेति शिवम् ।

---

1. NS. कुर्यात्तु
2. KSS., NS. तेऽप्यल्पश्रुतबुद्धयः ।
3. KSS., NS. बुद्धयः कर्मशिल्पानि वैचक्षण्यं कलासु च ।
4. KSS. सर्वाणि पुंसां प्रसमीक्ष्य च ।
5. ड-भावानां
6. शोभन्ते

[1]दशरूपविधानं च मया प्रोक्तं द्विजोत्तमाः ।
अतः परं प्रवक्ष्यामि वृत्तीनामिह लक्षणम् ॥१५४॥

इति भरतीये नाट्यशास्त्रे सन्धिनिरूपणं
नामाध्यायो एकोनविंशः ॥

---

द्विजवरतोतनिरूपितसन्ध्यध्यायार्थतत्त्वघटनेयम् ।
अभिनवगुप्तेन कृता शिवचरणाम्भोजमधुपेन ॥

इति श्रीमहामाहेश्वराभिनवगुप्ताचार्यविरचितायां नाट्यवेदविवृतावभिनव-
भारत्यामेकोनविंशः सन्ध्यध्यायः समाप्तः ॥

---

1. KSS., NS. इतिवृत्तं ससन्ध्यङ्गं ।

श्रीः

# नाट्यशास्त्रम्

## विंशोऽध्यायः[1]

— ० —

समुत्थानं तु वृत्तीनां व्याख्यास्याम्यनुपूर्वशः ।
यथा वस्तूद्भवं चैव काव्यानां च विकल्पनम् ॥१॥

---

### अभिनवभारती—विंशोऽध्यायः

### वृत्त्यध्यायः

निश्शेषशब्दव्यवहारवृत्तिवैचित्र्यमभ्येति यतः प्रतिष्ठाम् ।
श्रोत्रात्मकं तत्परमेश्वरस्य वन्देतमां रूपमरूपधाम्नः ॥

वृत्तिभेदात्काव्यभेदा भवन्तीत्युक्तं दशरूपकारम्भे (१८-५) । तत्र वृत्तयो न ज्ञाता इति तदवधारणार्थमाह समुत्थानं त्विति ।

यद्यपि कायवाङ्मनसां चेष्टा एव सह वैचित्र्येण वृत्तयः ताश्च समस्तजीवलोकव्यापिन्योऽनिदंप्रथमताप्रवृत्ताः प्रवाहेन वहन्ति, तथापि विशिष्टेन हृदयावेशेन युक्ता वृत्तयो नाट्योपकारिण्यः । आवेशश्च तारतम्यलक्षणो द्विधा लैकिकोऽन्यश्च । तत्र लैकिक आवेशः सुखदुःखतारतम्यकृतो न रसागमास्वाद्यो ह्यसावित्युक्तं रसाध्याये (अ ६) । अलौकिकस्त्वनावेशोऽप्यावेशमयः कवेरिव सामाजिकस्येव । क्वाप्यवसरे हृदयसंवादसरसस्यैव यो भासते स

---

1. KSS. द्वाविंशोऽध्यायः NS., GOS. विंशोऽध्यायः ।

एकार्णवं जगत् कृत्वा भगवानच्युतो यदा ।
शेते स्म नागपर्यङ्के लोकान्[1] संक्षिप्य मायया ॥२॥
अथ वीर्य[2]बलोन्मत्तावसुरौ मधुकैटभौ ।
तर्जयामासतुर्देवं तरसा युद्धकाङ्क्षया[3] ॥३॥
[4]निजबाहू विमृद्नन्तौ भूतभावनमक्षयम् ।
[5]जानुभिर्मुष्टिभिश्चैव योधयामासतुः प्रभुम् ॥४॥
[6]बहुभिः परुषैर्वाक्यैरन्योन्यसमभिद्रवम् ।
[7]नानाधिक्षेपवचनैः कम्पयन्ताविवोदधिम् ॥५॥

---

एव साधारणे चमत्कारगोचरव्यापारविशेषो रसस्योपकरणीभवति । तादृशश्च प्रथमतः कृतयुगारम्भे भगवतो वासुदेवस्यैव । तस्य हि स्वफलसिद्धये न किंचित् कर्तव्यमस्ति लोकानुग्रहं मुक्त्वा । यथा हि "न मे पार्थास्ति कर्तव्यं (गीता३-२२)" इति तेन साधारणस्य भावेन प्रविष्टानावेशेऽप्यावेशमयो, भगवानेव प्रथमतो नान्यः, पूर्वसर्गगामिनो व्यापारस्य प्रलयमहारजनीप्रस्तावेन भ्रष्टसंसारत्वात् अत एवाह—

एकार्णवं जगत्कृत्वा भगवानच्युतो यदा ।
शेते स्म नागपर्यङ्के लोकान् संक्षिप्य मायया ॥ इति ।

त्रेतायुगे च नान्यं प्रपत्स्यति । यद्यपि चादिकविर्वाल्मीकिरिति प्रवादस्तथापि प्रलयानन्तरं कृतयुगे भाविनि सन्व्यवसरप्रतिबन्धदर्पदलनजनित-

---

1. KSS. लोकं ।
2. KSS., NS. मदोन्मत्तौ ।
3. KSS., NS. युद्धकांक्षिणौ ।
4. KSS., बाहु विमर्दमानौ तौ NS. निजबाहुविसृष्टौ तौ ।
5. KSS. मुष्टिभिर्जानुभिश्चैव ताडयामासतुः प्रभुम् ।
6. KSS., NS. अभिद्रवन्तावन्योन्यं वाक्यैश्च परुषैस्तथा ।
7. KSS., NS. नानाविक्षेप ।

[1]तयोर्नानाप्रकाराणि वचांसि वदतोस्तदा[2] ।
[3]श्रुत्वा त्वभिहतमना द्रुहिणो वाक्यमब्रवीत् ॥६
[4]किमिदं भारतीवृत्तिर्वाग्भिरेव प्रवर्तते ।
उत्तरोत्तरसंबद्धा नन्विमौ निधनं नय ॥७॥
पितामहवचः श्रुत्वा प्रोवाच मधुसूदनः ।
[5]कार्यहेतोर्मया ब्रह्मन् भारतीयं विनिर्मिता ॥८॥
[6]वदतां वाक्यभूयिष्ठा भारतीयं भविष्यति ।

---

विघ्नापसरण पुरस्सरसृष्टिसम्पत्तौ चिरेण वाल्मीकिमुनेः प्रादुर्भावो भविष्यतीति साधारण्याशयेनैव च भगवानेव वृत्तीनां स्रष्टोक्तः न तौ तु मधुकैटभौ, तयोरावेशेन लौकिकेन व्याप्तत्वात्, उद्रिक्ततमतमस्सन्तानितस्वांतत्वेनाविद्यामयत्वात् । विद्यावकाशवशविकसितहृदयकमलपरिमलरूपत्वाच्च, आनन्दसारस्य रसोपयोगिनो व्यापारानावेशस्य भगवत्येव सम्भावनं न तु दैत्ययोः । अतएवाह किमिदं भारतीवृत्तिर्भगवन् वाग्भिरेव प्रवर्तते इति भगवतेत्यनेन ह्युक्तं, भगवानेव हि वृत्तीनां प्रवर्तयिता नटवदनावेशदर्शनात्, न तु मधुकैटभौ (तयोः) लौकिके चैव स्यादिति । द्रुहिणोऽभिहतमना वाक्यमब्रवीदित्यनेन प्रेक्षकत्वं ब्रह्मणः प्रदर्शयन् सामाजिकहृदये विश्रान्तिप्राधान्यं वृत्तीनामाह । तन्निष्ठत्वाद्रसचर्वणाया वाक्यग्रहणेन कार्यद्वारको वृत्तीनां नाट्योपयोग इति सूचयति वाग्भिरेवेति । वाचिकप्राधान्ये भारतीवृत्तिः । भारतीशब्देन हि वागुच्यत इति कार्यहेतोरित्युक्तं तत्कार्यं दर्शयति

---

1. NSS. तयोर्नेक ।
2. KSS., NS. श्रुत्वा वाक्यानि सर्जतोः ।
3. KSS., NS. किञ्चिदाकम्पित ।
4. NS. किमियं ।
5. KSS. बाढं कार्यक्रियाहेतोः ।
6. KSS. भाषतोः NS. भाष्यतोः ।

[1]तस्मादेतौ निहन्म्यद्य त्युवाच वचनं हरिः ॥९॥
शुद्धैरविकृतैरङ्गैः साङ्गहारैस्तथा[2] भृशम् ।
[3]योधयामासतुर्दैत्यौ युद्धमार्गविशारदौ ॥१०॥
[4]भूमिसंयोगसंस्थानैः पदन्यासैर्हरेस्तदा[5] ।
अतिभारोऽभवद् भूमेर्भारती तत्र निर्मिता ॥११॥
वल्गितैः शार्ङ्गधनुषस्तीव्रैर्दीप्ततरैरथ[6] ।
सत्त्वाधिकैरसंभ्रान्तैः सात्त्वती तत्र निर्मिता ॥१२॥

---

वदतामिति कवीनामिति यावत् । शुद्धैरिति स्वोत्प्रेक्षितवैचित्र्यशून्यैः । अङ्गानां हारान्नयतामिति भृशं युद्धमार्गे विशारदाविति संबन्धः । भूमिसंयोगेन संस्थान उद्धटि (ट्टि !) तसङ्कुचितादिरूपं येषां, पदन्यासानां न्यस्यमानानां पदानाम् । अतिभार इत्यक्षरसाम्यादपि निर्वचनं दर्शयन् नटव्यापारयोगेऽपि आन्तरविकल्पात्मकाभिः (वाग्भिः) संजुल्पबाहुल्ये भारत्येव वृत्तिरिति दर्शयति । सत्त्वाधिकैरिति मनोव्यापाराधिक्ये सात्त्वतीवृत्तिरित्याह सत्-सत्त्वरूपं विद्यते येषां तत्त्वं तेषामयमिति । सत्त्वं च तत्र परच्छिद्रान्वेषणोपायमप्रतितानवैचित्र्योत्प्रेक्षणप्रकाशलाघवात्मकं, अत एवाह विचित्रैरिति । स्वोत्प्रेक्षितेन हि वैचित्र्येण विना कथं युद्धविशारदौ जय्यौ स्याताम्, द्वयोर्ह्येकागमानुसन्धानेन युध्यमानयोः सम्बुद्धिकयोः कस्य जयः कस्य पराजयो वा भवेदिति, शिखापाशं पट्टबन्धम्, तुर्हेतौ शृङ्गारस्थानलक्ष्मीसम्भोगादिस्मरणात् । लीलया विलासेन अन्वयः शिखापाशमयेन आबध्योदासीनो वर्तेत इति । चारीभिः प्रायेण निश्शङ्कं प्रवर्तमानौ दैत्यौ सुखं निपात्येते मय्येव

---

1. KSS., NS. अहमेतौ निहन्म्यद्य इत्युक्त्वा ।
2. KSS., NS.
3. KSS., NS. योधयामास तौ ।
4. KSS., NS. भूमिसंस्थानसंयोगैः ।
5. KSS., NS. तदा हरेः ।
6. KSS. तीव्रैर्दीप्तिकरैः NS. दीप्तिकैः ।

विचित्रैरङ्गहारैस्तु देवो लीलासमन्वितैः ।
बबन्ध यच्छिखापाशं कैशिकी तत्र निर्मिता ॥१३॥
संरम्भावेगबहुलैर्नानाचारी समुत्थितैः ।
नियुद्धकरणैश्चित्रै[1]रुत्पन्नारभटी ततः ॥१४॥
यां यां देवः समाचष्टे क्रियां वृत्तिषु संस्थिताम्[2] ।
तां तदर्थानुगै[3]र्जल्पैर्द्रुहिणः प्रत्यपूजयत् ॥१५॥
यदा हतौ तावसुरौ हरिणा मधुकैटभौ ।
[4]ततोऽब्रवीत् पद्मयोनिर्नारायणमरिन्दमम् ॥१६॥
अहो विचित्रैर्विषमैः[5] स्फुटैः सललितैरपि ।
अङ्गहारैः कृतं देव त्वया दानवनाशनम् ॥१७॥
तस्मादयं हि लोकस्य नियुद्धसमयक्रमः ।
सर्वशस्त्रविमोक्षेषु न्यायसंज्ञो भविष्यति ॥१८॥

परिश्रमापनयनं सम्पद्यत इति । देव इति लोकवदनाविष्टः । यां यामिति वीप्सया सर्वैव क्रिया वृत्तिचतुष्टयव्याप्तेत्याह । न हि वाङ्मनश्चेष्टातोऽतिरिक्तकर्मास्ति । न च क्रियाशून्यः कश्चिदप्यंशोऽस्ति । मूर्छामोहमरणादावपि सूक्ष्मप्राणपरिस्पन्दाद्यनुमेयसञ्चितपरिस्पन्दसम्भावना । मृतस्तु ताम्रपाषाणप्रख्यो न तस्य वृत्तिकथनेन किंचित्स्वपरम्, अन्यस्य शोकादिविभावनां प्रतिपाद्यमानः काव्याङ्गतामेति स च तदानीं करुणादिरसाक्रान्तः काव्ये व्यावर्णनीयो भवति । रसभावपर्यवसितो हि सर्वः कार्यं संदर्भः । रसभावाश्च चेतनेष्वेव, तेषु च न व्यापारत्रयशून्यः कश्चिदपि काव्यांशोऽस्ति ।

1. KSS., NS. निर्मिता ।
2. KSS., NS. क्रियां वृत्तिसमुत्थिताम् ।
3. KSS., NS. वाक्यैः ।
4. KSS., NS. उक्तवांस्तु तदा ब्रह्मा ।
5. KSS.; NS. विशदैः ।

[1]न्यायाश्रितैरङ्गहारैर्न्यायाच्चैव समुत्थितैः ।
यस्माद्युद्धानि वर्तन्ते तस्मान्न्यायाः प्रकीर्तिताः[2] ॥१९॥
[3][चारीषु च समुत्पन्नो नानाचारीसमाश्रयः ।
न्यायसंज्ञः कृतो ह्येष द्रुहिणेन महात्मना ॥]२०॥
[4][ततो वेदेषु निक्षिप्ता द्रुहिणेन महात्मना ।
[5]पुनरिष्वस्त्रजाते च नानाचारीसमाकुले ॥२१॥
पुनर्नाट्यप्रयोगेषु नानाभावसमन्विताः[6] ।
वृत्तिसंज्ञाः कृता ह्येताः[7] काव्यबन्धसमाश्रयाः ॥]२२॥

---

तेन पञ्चवृत्तयो द्वे वृत्ती इत्यादयोऽसंविदितभरताभिप्रायपण्डितसहृदय-म्मन्यपरिकल्पितसद्भावाः प्रवादा निरस्ता भवन्ति । एतच्च पूर्वमेवास्माभिः प्रदर्शितम् ।

जप्यैरिति भक्त्यावेशमात्रवृत्ति च दर्शयन् कवेर्मुख्यं रसाधिष्ठत्वमेव रूपं विस्तारणात्मकवर्णनाप्राधान्यं चेति दर्शयति । (विषमैः) शस्त्रागममार्गात्मना-गम्यप्रकारैः (अद्भु)तैरपि, तथा स्फुटैरपि सर्वलक्षणप्रसिद्धैरपि चित्रैः स्वार्थोत्प्रेक्षितवैचित्र्यवद्भिः, सललितैरिति लोचनगोचरवर्तित्वेनातिभ्रम्यै-रित्यर्थः । अयमिति भवदुपज्ञातवैचित्र्यबृंहित इत्यर्थः । नियुद्धसमयक्रम इति समयग्रहणेन वैचित्र्ययोगेऽपि शस्त्रागमापरित्यागमाह । क्रमः परिक्रमणं क्रमो वा शत्रुविक्रमणयोगे गतागतस्य निभृतं शस्त्रादिशून्यं युद्धं नियुद्धं मल्ल-

---

1. KSS., NS. युद्धं कृतं ह्येतत् ।
2. KSS., NS. न्यायः प्रकीर्तितः ।
3. KSS., NS. do not read this verse.
4. KSS., NS. ततो देवेषु ।
5. KSS., NS. पुनरिष्टसुजातेन ।
6. KSS., NS. रसान्विताः ।
7. KSS., NS. ह्येषा नानाभावरसा श्रेया ।

चरितैर्यस्य देवस्य जप्यं[1] यद्यादृशं कृतम् ।
ऋषिभिस्तादृशी वृत्तिः कृता पाठ्यादिसंयुता[2] ॥२३॥
नाट्यवेदसमुत्पन्ना वागङ्गाभिनयात्मिका ।
मया काव्यक्रियाहेतोः प्रक्षिप्ता द्रुहिणाज्ञया ॥२४॥
ऋग्वेदाद्भारती क्षिप्ता[3] यजुर्वेदाच्च[4] सात्त्वती ।
कैशिकी सामवेदाच्च शेषा चाथर्वणादपि[5] ॥२५॥

---

युद्धं, तद्गतमपि यदेतद्रूपं तदुत्प्रेक्ष्यवैचित्र्ययोगात्सर्वेषु शस्त्रास्त्रयुद्धेष्वप्युपयोगि भविष्यति । विमोक्षग्रहणात् क्षेप्तव्यकुन्तचक्रादिविषयत्वमेव केचिदाहुः । तच्चासत्, क्षिपेः पातमात्रपर्यवसायिनः खड्गादियुद्धेष्वप्यप्रतिहतार्थयुक्तत्वात् । न्यायशब्दनिर्वचनमाङ्गिकाभिनयनिरूपणायां कृतं स्मारयति न्यायाश्रितैरिति एतच्च तत्रैव व्याख्यातम् ।

एवं वृत्तीनामुत्पत्तिर्व्याख्याता । आसामेव नाट्यं प्रत्यवतारणं कर्तुमाह चरितैर्यस्येति भगवद्विश्वचरितैर्गर्भाधेयभूतैः उपलक्षितं यत् पूर्वं ब्रह्मणा जप्यं स्तोत्रकाव्यरूपं कृतं, तादृशं भावादिचेष्टाप्रधानं, तादृश्येव वृत्तिः । ऋषिभिः ब्रह्मपुत्रैः पाठ्यादिभिः सम्यग्युक्ता कृता अनुसृता । यद्यथा पाठ्यप्रधाना भारती, अभिनयप्रधाना सात्त्वती, अनुभावाद्यावेश [स] मय-रसप्रधानारभटी, गीतवाद्योपरञ्जकप्रधाना कैशिकीति । अत एव वक्ष्यति ऋग्वेदाद्भारतीत्यादि नाट्यवेदोत्पत्तौ प्रथमाध्याये व्याख्याता या सा । द्रुहि-णाज्ञा कैशिकीमपि योजय (१-४२) इत्यादिका या तया । काव्यस्य क्रिया काव्यरूपतापादनं, तदेव हेतुः, ततः । प्रकर्षेण क्षिप्ता येनाभिनेयानभिनेय-काव्यवैलक्षण्यमित्यर्थः ।

---

1. KSS., NS. द्रव्यं ।
2. KSS., NS. वाक्याङ्गसम्भवा ।
3. KSS., NS.
4. KSS., NS. वत्तु ।
5. KSS., NS. तथा ।

या वाक्प्रधाना पुरुषप्रयोज्या
स्त्रीवर्जिता संस्कृतपाठ्य[1] युक्ता।
स्वनामधेयैर्भरतैः प्रयुक्ता
सा भारती नाम भवेत्तु वृत्तिः ॥२६॥
भेदास्तस्यास्तु विज्ञेयाश्चत्वारोऽङ्गत्वमागताः।

---

ननु भगवता वासुदेवेनाप्यंशावताररूपत्वात्संभाव्य*..................
व्ययोदयमूर्तिना कुतः इमा वृत्तय आनीता इत्याशङ्क्याह—ऋग्वेदादित्यादि। छन्दोमयश्च परमेश्वरो नान्यत इति भावः।

अथासां परस्परसङ्कीर्णतया लक्ष्ये (बहुरूपतां) वहन्तीनां यत्र यत्प्राधान्येनान्यतमरूपावभासनं तत्प्रदर्शयितुमुत्तरो ग्रन्थः। (वाङ्मनःनकायचेष्टांशेषु) न ह्यकोऽपि कश्चिच्चेष्टांशोऽस्ति। कायचेष्टा अपि हि मानसीभिः सूक्ष्माभिश्च वाचिकीभिश्चेष्टाभिर्व्याप्यन्त एव। "न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते" (वाक्यपदीयं १-१२४) इति न्यायात्, मानस्यपि वाचिक्यपि चेष्टा अवश्यं सूक्ष्मं काल (य?) परिस्पन्दमन्दप्राणव्यापाररूपं नाभि(ति?)वर्तते। तदुक्तम्—

अर्थक्रियासु वाक् सर्वान् समीहयति देहिनः।
तदुत्क्रान्तौ विसंज्ञोऽयं दृश्यते काष्ठकुयड्वत् ॥ (सङ्ग्रहः*)

न च रसोपयोगिलालित्यभागशून्यः कोऽपि नाट्ये परिस्पन्द इत्यन्योन्यं संवलिता वृत्तयः केवलं क्वचित्किंचिदधिकमिति प्राधान्येन व्यपदेशः परिवर्तते। तत्र भारत्याः प्राधान्यं दर्शयति या वाक्प्रधानेति। स्त्रीवर्जितेति कैशिकीप्राधान्यावकाशं गमयति। संस्कृतेति वचसा प्राकृतपाठ्यलालित्यात् कैशिकीमवश्यमाक्षिपेदिति सूचयति। भरतैरिति नटैः स्वतो वंशकरं नामधेयं येषां (तैः), भरतसंतानत्वात्तद्धिते भरताः। भेदा इति अस्यामित्यर्थोऽत्र

---

1. KSS., NS. वाक्ययुक्ता।

*अयं श्लोको भगवता भर्तृहरिणा वाक्यपदीये स्ववृत्तौ (१-१२७) उदाहृतः, व्याडिसंग्रहात् स्यात्।

प्ररोचनामुखं चैव वीथी प्रहसनं तथा ॥२७॥
जयाभ्युदयिनी चैव मङ्गल्या विजयावहा ।
सर्वपापप्रशमनी पूर्वरङ्गे प्ररोचना ॥२८॥

[उपक्षेपेण काव्यस्य हेतुयुक्तिसमाश्रया ।
सिद्धेनामन्त्रणा या तु विज्ञेया सा प्ररोचना ॥]२९॥
नटी विदूषको वापि पारिपार्श्विक एव वा ।
सूत्रधारेण सहिताः संलापं [1]यत्तु कुर्वते ॥३०॥
चित्रैर्वाक्यैः स्वकार्योत्थैर्वीथ्यङ्गैरन्यथापि वा ।

---

न तु प्रकाराः, त्रैलोक्यव्यापिन्या हि भारत्याः कश्चिदंशः प्ररोचनारूपः, एवमामुखस्वभाव इत्यादि । अत एवाह—अङ्गत्वमिति अंशत्वं प्राप्ता इत्यर्थः, अन्यथा यदि रूपकस्याङ्गत्वं प्राप्ता इत्युच्यते तदा वीथी प्रहसनं च रूपक-भेदः, न तु रूपकस्याङ्गम् । तथा नाट्यस्याङ्गत्वं प्राप्तं (प्राप्ता?) नाट्यमिति समु-दायः । यदि वा एकैकमपि काव्यं दशरूपमित्युक्तं प्राक् । पूर्वरङ्ग इति तद्विषये, प्ररोचना पूर्वमुक्ता तत्र च कृते वा प्ररोचना सा भारत्यंश इत्यर्थः ।

नटीत्यादिना आमुखं लक्षयति । वा शब्देन व्यस्तानां नटीप्रभृतीनां सूत्रधारेण सङ्घातमाह । अपिशब्देनात्मना समस्तानां, द्वितीयो वा शब्दः समस्तव्यस्ततां विकल्पयति । एवशब्दः सूत्रधारस्यावश्यंभावं दर्शयति । चित्रैरिति भाविरूपकार्थानुकूलविषयानुसारिभिः, स्वं कार्यं नटव्यापारं, वीथ्यङ्गैरिति श्लिष्टवक्रोक्तिप्रत्युक्तिप्रायैरित्यर्थः, यथा "पीताम्बरगुरु-शक्त्या हरत्युषां प्रसभमनिरुद्धः" इत्यादि । अन्यथेति स्पष्टोक्तिप्रत्यु-क्तिभिः, यथा नागानन्दे "नाटयितव्ये किमित्यकारणमेव रुद्यते" इत्यादि । आमुखमिति मुखसन्धेर्निवर्तते यतः, आङ् मर्यादायाम्, यदि वात्रामुखं प्रारम्भमी-षन्मुखं वा प्रस्ताव्यतेऽनयेति (प्रस्तावना) बाहुलकेन तच्छीलसंज्ञयोरिति ········निकारो न भवति । तत्र कदाचित्कार्याभिमुखं नीयते पूर्वरङ्गविधिः,

---

1. KSS., NS. त्र्य ।

[1]आमुखं तत्तु विज्ञेयं बुधैः प्रस्तावनापि वा ॥३१॥

[लक्षणं पूर्वमुक्तं तु वीथ्याः प्रहसनस्य च ।

आमुखाङ्गान्यतो वक्ष्ये यथावदनुपूर्वशः ॥] ३२॥

उद्धात्यकः कथोद्घातः प्रयोगातिशयस्तथा ।

प्रवृत्तकावलगिते पञ्चाङ्गान्यामुखस्य तु ॥३३॥

---

तदभिमुखं वा कार्यारम्भः तन्नीयते, सा द्विधेति (५-१८०) पूर्वरङ्गाध्याये दर्शितमस्माभिः। एवं च यदा स्थापकोऽपि सूत्रधारतुल्यगुणाकारो रामादिवदेव प्रयुज्यते तदेदं कविकृतमामुखं भवति ।

अन्ये त्वाहुः—पूर्वरङ्गाध्यायेऽपि या प्रस्तावनोक्ता सापि भारतीभेद एवेति, किं द्वैविध्याभिधानप्रयासेन । यत्तु "क्रुद्धो भीम इत एवाभिवर्तते तन्न युक्तमस्य पुरतोऽवस्थातु" इत्यादि, तत्तदीयसत्त्वावेशादेवास्य प्रकाशनाय सामाजिकानां साक्षात्कारकल्पाध्यवसायसम्पत्त्यर्थं सूत्रधारेणोच्यते, शिशु-सन्त्रासाय कयाचिदाकृत्या कश्चिदत्रस्यन्नपि त्राससंरम्भगर्भमाह "अय-मागतो राक्षसः" इति, यथोक्तं भावाध्याये (७) "सत्त्वशुद्धा मूर्तव्याः"* इति, एतच्च तत्रैव निर्णीतम् । तस्यामुखस्य पञ्चाङ्गानि भेदा इत्यर्थः ।

ननु एवं सति पञ्चानां युगपत्प्रयोगे प्रस्तावना प्रयुक्ता स्यात्, न चैतन्मुनेरभिमतम् । तथा हि वक्ष्यति—

एषामन्यतमं श्लिष्टं योजयित्वार्थयुक्तिभिः ।

पात्रग्रन्थैरसम्बाधं प्रकुर्यादामुखं ततः ॥ (२०-३७)

इत्युद्देशे । यद्यपि पश्चादवलगितमुक्तं तथा तयोस्तुल्यं, लक्षणस्य पूर्वोक्तत्व-मित्याशयेनाह—उद्धात्यकावलगितयोर्लक्षणं कथितमिति वीथ्यङ्गव्याख्याने,

---

1. KSS., NS. do not read here two lines.

2. KSS., NS. आमुखाङ्गानि पञ्च वै ।

* "सत्त्वविशुद्धाः कार्या यथास्वरूपा भवन्ति" (७-१४७) इति भागस्य व्याख्यानावसरे । तद्व्याख्याभागो नष्टः ।

उद्घात्यकावलगित[1]लक्षणं　कथितं　मया ।
शेषाणां लक्षणं विप्रा व्याख्यास्याम्यनुपूर्वशः ।।३४।।
सूत्रधारस्य वाक्यं वा यत्र वाक्यार्थमेव वा ।
गृहीत्वा प्रविशेत्पात्रं कथोद्घातः स कीर्तितः[2] ।।३५।।
प्रयोगे तु प्रयोगं तु सूत्रधारः प्रयोजयेत् ।
ततश्च प्रविशेत्पात्रं प्रयोगातिशयो हि सः ।।३६।।
[3]कालप्रवृत्तिमाश्रित्य वर्णना या प्रयुज्यते ।
तदाश्रयाच्च पात्रस्य प्रवेशस्तत्प्रवृत्तकम् ।।३७।।
एषामन्यतमं श्लिष्टं योजयित्वार्थयुक्तिभिः[4] ।
[5][तस्मादङ्गद्वयस्यापि सम्भवो न निवार्यते ।।]३८।।

---

यद्यपि च प्रस्तावनायामन्यान्यपि वीथ्यङ्गानि भवन्ति, आमुखसामान्यलक्षणेऽप्युक्तं वीथ्यङ्गैरिति, तथाप्युद्घात्यकमवलगितं च भाविकाव्यार्थप्रस्तावनेति बालरङ्गं(प्रस्तावने प्रबलमङ्गं?), तथा तयोर्लक्षणम्—

पदानि त्वगतार्थानि ये नराः पुनरादरात् ।
योजयन्ति पदैरन्यैस्तदुद्घात्यकमुच्यते ।।
यत्रान्यस्मिन् समावेश्य कार्यमन्यत्प्रसाध्यते ।
तच्चावलगितं ।।इति (१८-११६) ।

वाक्यमिति, यथा—(रत्नावल्यां) "द्वीपादन्यस्मात्" इति । वाक्यार्थे यथा प्रतिमानिरुद्धे—"पीताम्बरगुरुशक्त्या हरत्युषां" इति । केवलमत्र

---

1. KSS. NS. अवगलितयोर्लक्षणं ।
2. NS. प्रयोगातिशयो हि सः ।
3. KSS., NS. प्रवृत्ति कार्यं ।
4. KSS., NS. योजयित्वा तु युक्तिभिः ।
5. KSS., NS. do not raad this line.

पात्रग्रन्थैरसंबाधं प्रकुर्यादामुखं ततः[1] ।
एवमेतद्बुधैर्ज्ञेयमामुखं विविधा[2]श्रयम् ॥३९॥
लक्षणं पूर्वमुक्तं तु वीथ्याः प्रहसनस्य च ॥
[इत्यष्टार्धविकल्पा वृत्तिरियं भारती मयाभिहिता[3] ॥
सात्त्वत्यास्तु विधानं लक्षणयुक्त्या प्रवक्ष्यामि ॥]४०॥
या सात्त्वतेनेह गुणेन युक्ता
न्यायेन वृत्तेन समन्विता च ।
हर्षोत्कटा संहृतशोकभावा
सा सात्त्वती नाम भवेत्तु वृत्तिः ॥४१॥

---

वीथ्यङ्गनिबद्धम् । कथा काव्यर्थरूपा, ऊर्ध्वमेव हन्यते तत्रेति गम्यते कथोद्घातः ।

प्रयोग इति प्रस्तावनात्मके, प्रयोगमिति नाट्यात्मकं भावितम् । एकस्तु-शब्दो भेदान्तरेभ्यो व्यतिरेकमाह, द्वितीयोऽवधारणे । सूत्रधार एव यत्र प्रयोगे प्रयोगं समुद्गककवाटयुगलवद्योजयति स प्रयोगद्वयश्लेषणात्प्रयोगातिशयः । यथा विक्रमोर्वश्याम्—अथ कुररीणामिवाकाशे शब्दः श्रूयते । आः ज्ञातम्—

ऊरूद्भवा नरसखस्य मुनेः सुरस्त्री
कैलासनाथमुपनृत्य निवर्तमाना ।
वन्दीकृता विबुधवैरिभिरर्धमार्गे
क्रन्दत्यतः करुणमप्सरसां गणोऽयम् ॥ इति ।

यदा कालप्रवृत्तिं कांचिदवलम्ब्य यथा सूत्रधारेण किञ्चिद्वस्तु वर्ण्यते तदा-

---

1. KSS., NS. बुधः
2. KSS., NS. विबुधाश्रयम् ।
3. KSS., NS. प्रोक्ता ।

वागङ्गाभिनयवती सत्त्वोत्थान[1]वचनप्रकरणेषु ।
सत्त्वाधिकारयुक्ता विज्ञेया सात्त्वती वृत्तिः ॥४२॥
वीराद्भुतरौद्ररसा निरस्तभृङ्गारकरुणनिर्वेदा[2] ।
उद्धतपुरुषप्राया परस्पराधर्षणकृता च ॥४३॥
उत्थापकश्च परिवर्तकश्च सल्लापकश्च संघात्यः[3] ।

---

[प्र]श्रयेण च पात्रस्य प्रवेशः तत्कालप्रवृत्त्या स्वार्थोक्तत्वात् प्रवृत्तकम्, यथा:
"अस्यां शरदि—

सत्पक्षा मधुरगिरः प्रसाधिताशा मदोद्धतारम्भाः ।" (वेणी १) इत्यादि पात्रग्रन्थैरसम्बाधमिति यत्र न भूयांसि पात्राणि अल्पपात्रेऽपि ग्रन्थबहुलत्वं तथारूपमामुखं कुर्यात् । विविधाश्रयमिति वहुभेदमित्यर्थः । पूर्वमुक्तमिति दशरूपकाध्याये ।

यद्यपि अभेदव्यतिरेकेणापि भारती (तो?) (न्यायो) न दृश्यते तथापि न्यायेनेति तत्प्रकारचतुष्कं निरूपितम् (१०-७२) सात्त्वतो गुणः मानसो व्यापारः । सत्सत्त्वं प्रकाशः तद्विद्यते यत्र तत्सत्त्वं मनः, तस्मिन् भवः । सत्त्वोत्थानस्य सत्त्वाधारस्य, वचनं येषु प्रकरणेषु काव्यखण्डेषु, तेषु वागङ्गाभिनययुक्ता सती, सत्त्वस्य सात्त्विकाभिनयस्याधिकारे आधिक्यक्रियया सात्त्वतीवृत्तिर्युक्ता भवतीति सम्बन्धः ।

शृङ्गारे विषयनिमग्नं मनः, करुणे कान्दिशीकं, निर्वेदे मूढमिति तद्व्यापारो भवन्नपि क्रोधविस्मयोत्साहेष्विव न सातिशयं परिस्फुरतीति दर्शयति वीराद्भुतरौद्ररसेति । आधर्षणं वाचा न्यक्कारः । उत्थापयति यो मानसः परिस्पन्दः स तावदुत्थापकः तत्सूचको व्यापारक्रम उपचारः, तथोक्तः । तथा वेणीसंहारे भीमः—भो भोः शृण्वन्तु भवन्तः—

---

1. KS. सत्त्वोथान ।
2. KSS., NS. विज्ञेया ह्यल्पकरुणशृंगारा ।
3. KSS., NS. ससंघातः ।

चत्वारोऽस्या भेदा विज्ञेया नाट्यतत्त्वज्ञैः ॥४४॥
अहमप्युत्थास्यामि त्वं तावद्दर्शयात्मनः शक्तिम् ।
इति [1]संघर्षसमुत्थस्तज्ज्ञैरुत्थापको ज्ञेयः ॥४५॥
उत्थानसमारब्धानर्थानुत्सृज्य योऽर्थयोगवशात् ।
अन्यानर्थान् भजते स चापि परिवर्तको ज्ञेयः ॥४६॥
[[2]निर्दिष्टवस्तुविषयः प्रपञ्चबद्धस्त्रिहास्यसंयुक्तः ।
संघर्षविशेषकृतस्त्रिविधः परिवर्तको ज्ञेयः]॥४७॥
साधर्षजो निराधर्षजोऽपि वा [3]रागवचनसंयुक्तः ।
साधिक्षेपालापो ज्ञेयः सल्लापकः सोऽपि ॥४८॥

---

स्पृष्टा येन शिरोरुहेषु पशुना पाञ्चालराजात्मजा
येनास्याः परिधानमप्यपहृतं राज्ञां कुरूणां पुरः ।
यस्योरः स्थलशोणितासवमहं पातुं प्रतिज्ञातवान्
सोऽयं मद्भुजपञ्जरे निपतितः संरक्ष्यतां कौरवाः ॥ इति ।

परिवर्तको यथा तत्रैव भीमः—सहदेव गच्छ त्वं गुरुमनुवर्तस्व । अहमप्यस्त्रागारं प्रविश्यायुधसहायो भवामि ।

सहदेवः—आर्य, नेदमायुधागारम्, पाञ्चाल्याश्चतुश्शालमिदम् ।

भीमः—किं नामेदं (इत्यादि यावत्) अथवा मन्त्रयितव्यैव मया पाञ्चाली । इति

अस्त्रागारप्रवेशपरित्यागेन पाञ्चालीदर्शनात्मककार्यान्तरसम्पादको मानसो व्यापारः परिवर्तयति कार्यमिति, परिवर्तकवचनं तूपचारारूढम् । एवमुत्तरत्रापि ।

---

1. KSS., NS. संघर्षसमाश्रयमुत्थितं ।
2. KSS., NS. do not read it.
3. KSS., NS. वापि विविधवचनसंयुक्तः ।

([1]धर्माधर्मसमुत्थं यत्र भवेद्रागदोषसंयुक्तम् ।
साधिक्षेपं च वचो ज्ञेयः संलापको नाम) ॥४९॥
[2]मन्त्रार्थवाक्यशक्त्या दैववशादात्मदोषयोगाद्वा ।
संघातभेदजननस्तज्ज्ञैः संघात्यको[3] ज्ञेयः ॥५०॥
([4]बहुकपटसंश्रयाणां परोपघाताशयप्रयुक्तानाम् ।
कूटानां संघातो विज्ञेयः कूटसंघात्यः) ॥५१॥
इत्यष्टार्धविकल्पा वृत्तिरियं सात्त्वती मयाभिहिता ।
कैशिक्यास्त्वथ[5] लक्षणमतः परं सम्प्रवक्ष्यामि ॥५२॥

---

सह (आ) धर्षणेन यद्वाक्यं (साधर्षं) तद्विरहितं निराधर्षं, तेन खलीकारका-द्वचनादन्यतोऽपि वा सत्, अनन्तरमधिक्षेपं वचनमभिभावकं मानसं कर्म तत्सल्लापकशब्दवाच्यम् । यथा—

अश्वत्थामा हत इति पृथासूनुना स्पष्टमुक्त्वा
स्वैरं शेषे गज इति किल व्याहृतं सत्यवाचा । (वेणी० ३-११)

इत्यत्र सत्यवाचेति ।

(सङ्घातभेदजनन इति) सङ्घातस्य भेदं जनयति यो युधि स सङ्घा-त्यकः, सम्यक्घात्यः शत्रुवर्गो येन, सङ्घातकविषयाद्वा सङ्घात्यकः, सङ्घात-भेदश्च परेण सामाद्युपायबलेन वा क्रियते । यथा भीमो युधिष्ठिरेण साम्ना भेदितः, अतः शिखण्डिनं पुरस्कृत्य योद्धव्यश्च । दैवात्संपद्यते, यथा द्रोणेनोक्तं सुते हते शस्त्रं त्यक्ष्यामीति । आत्मदोषे वा स्वकटकलक्षणेन, यथा कर्णेन सह

---

1. KSS., NS. do not read this verse.
2. KSS., NS. मित्र्यार्थवाक्ययुक्त्या ।
3. KSS., NS. संघातको ।
4. KSS., NS. Omit this verse.
5. KSS., NS. इह ।

या श्लक्ष्णनैपथ्यविशेषचित्रा
स्त्रीसंयुता या बहुनृत्तगीता ।
कामोपभोगप्रभवोपचारा
तां कैशिकीं वृत्तिमुदाहरन्ति ॥५३॥

[[1]बहुवाद्यनृत्तगीता शृङ्गाराभिनयचित्रनैपथ्या ।
माल्यालङ्कारयुता प्रशस्तवेषा च कान्ता च ॥५४॥
चित्रपदवाक्यबन्धैरलङ्कृता हसितरुदितरोषाद्यैः ।
स्त्रीपुरुषकामयुक्ता विज्ञेया कैशिकीवृत्तिः] ॥५५॥

नर्म च नर्मस्फुञ्जो[2] नर्मस्फोटोऽथ नर्मगर्भश्च ।
कैशिक्याश्चत्वारो भेदा ह्येते समाख्याताः ॥५६॥

आस्थापितशृङ्गारं विशुद्धकरणं निवृत्तवीररसम् ।

---

कलहायमानोऽश्वत्थामा शस्त्रत्यागं करोतीति । अत्र च सत्त्वाधिक्यमपराध्यति "कथं नामाहमेवंभूत" इति (वेण्यां तृतीयेऽङ्केऽन्ते) ।

अथेत्यनन्तरम् । अतःपरमित्येतेभ्यो लक्षणेभ्यः पृथग्भूतमित्यर्थः । श्लक्ष्णः सुकुमारः श्लिष्यति हृदय इति कृत्वा । नैपथ्यविशेषो वस्त्रमाल्यादिः तेन चित्रा, बहु विपुलं गीतं नृत्तं च यस्याम्, कामोपभोगो रतिः ततः प्रभवो यः स शृङ्गारस्तद्बहुल उपचारो व्यवहारो यस्यां, सा तथोक्ता । (कैशिक्याश्चत्वार्यङ्गानि नर्माख्यं नर्मोपपदानि च तत्र नर्मणः शृङ्गारस्थापकत्वं) हासप्रधानता च तदेति सामान्यलक्षणम् । तत्र हास ईर्ष्यां वा सूचयितुं परं वोपालब्धुं परहृदयं वाक्षेप्तुमिति त्रिधा (आत्मेति) आत्मनः परकीयस्य चित्तस्योपक्षेप आत्मसमीपकरणम् । उदाहरणम्—वासवदत्ता (फलकमुद्दिश्य सहासं)

---

1. KSS., NS. do not read these verses.
2. KSS., NS. स्फुर्जो ।

हास्यप्रवचनबहुलं नर्म त्रिविधं विजानीयात् ॥५७॥
[1]ईर्ष्याक्रोधप्रायं सोपालम्भकरणानुविद्धं च ।
आत्मोपक्षेपकृतं सविप्रलम्भं स्मृतं नर्म ॥५८॥
नवसङ्गमसम्भोगो रति[2] समुदयवेषवाक्यसंयुक्तः ।
ज्ञेयो नर्मस्फुञ्जो[3] ह्यवसानभयात्मकश्चैव[4] ॥५९॥

---

एसा वि अवरा तस्स समीवे जाआ लिहिदा । एदं वि अय्यवसन्तअस्स विण्णाणम् (एषाऽप्यपरा तस्य समीपे जाया लिखिता एतदप्यार्यवसन्तस्य विज्ञानम्) ।

द्वितीयस्योदाहरणं—"शीतांशुर्मुख" मित्यादि श्रुतवती वासवदत्ता यदा राज्ञोच्यते, "प्रिये वासवदत्ते" इति तद्वचसोपालम्भं सा सहासमाह—"अय्यउत्त मा एव्वं भण" इत्यादि ।

तृतीयस्य सुसङ्गता (विहस्य) "जादिसो तुए कामदेवो आलिहिदो मए वि तारिसी रई आलिहिदा । ता असंभाविणी, कहेहि दाव वुत्तंतं ।"

एवं त्रिभेदं नर्माख्यमाख्याय नर्मस्फुञ्जं प्रकाशयितुमाह **नवसङ्गमेति** नवसङ्गममात्र एव सम्भोगो यत्र । कथं तस्य सङ्गमस्य सम्भोगत्वमित्याह **रतिसमुदयेति** । रतेरन्योन्यास्थावन्धरूपायाः समुदयः स्फुटत्वं, यस्तादृशेन वेषेण वाक्येन वा योगो यत्र । अवसाने च भयं पूर्वनायिकाकृतम् । यथा रत्नावल्यामुदयनस्य सागरिकायाश्च नर्मणः स्फुञ्जो विघ्न इत्यर्थः ।

**विविधा भावाः** भयहासहर्षत्रासरोषाद्याः लवैर्लवैरित्यत एव भयादीनामंशेन भावात् स्थायित्वानुपगमात् भयानकहास्यरौद्रादिरसतापत्तिर्न सम्भवति । शृङ्गारस्तु पूर्व एव "जस्स किदे तुमं एत्थ आअदा से एत्थ एव्व चिट्ठदि" इति सुसङ्गतोक्तौ* हासलवः, न हास्यो रसः ।

---

1. KSS., NS. ईर्ष्याक्रोधप्रयासोपालम्भवचनानुविद्धं च ।
2. KSS., NS. समुदयवाक्यवेश ।
3. KSS., NS. नमस्फुर्जो ।
4. KSS., NS. भयानकश्चैव ।

विविधानां भावानां लवैर्लवैर्भूषितो बहुविशेषैः[1]।
असमग्राक्षिप्तरसो नर्मस्फोटस्तु विज्ञेयः ॥६०॥
विज्ञानरूप[2]शोभाधनादिभिर्नायको गुणैर्यत्र।
प्रच्छन्नं व्यवहरते कार्यवशान्नर्मगर्भोऽसौ ॥६१॥
[3]पूर्वस्थितौ विपद्येत नायको यत्र चापरस्तिष्ठेत्।
तमपीह नर्मगर्भं विद्यान् नाट्यप्रयोगेषु ॥६२॥
इत्यष्टार्धविकल्पा वृत्तिरियं कैशिकी मयाभिहिता।
अत ऊर्ध्वमुद्धतरसामारभटीं संप्रवक्ष्यामि ॥६३॥

---

"सहि कस्सकिदे अहं एत्थ आअदा" इत्यत्र सागरिकोक्तौ (रौद्र) लवो न तु रौद्रः। एवमन्यत्र। नर्मण इति तदुपलक्षितस्य शृङ्गारस्य स्फोटो वैचित्र्यं चमत्कारोल्लासकृतस्फुटत्वं यत्रेति।

शृङ्गारोपयोगिभिर्विज्ञानाद्यैः प्रच्छन्नं यत्र नायक आस्ते नवसमागमसिद्धये स नर्मगर्भः। नर्मोपयोगिनो विज्ञानाद्या गर्भीकृता इव प्रच्छन्नतया यत्रेति, यथा प्रच्छन्नरूपो नायकः सङ्केतस्थानं गच्छति।

(उद्धतेति) दीप्तरसा रौद्रादयः उद्धताः (प्रारभटेति) आरभटानां ये गुणाः क्रोधोवेगाद्यास्ते (प्रायेण) बाहुल्येन यत्र, बहुभिः कपटैः यद्वञ्चनं तेनोपेता। कपटत्रयं च समवकारलक्षणे (१८-७१) व्याख्यातम्। यत एवास्यां कपटयोगोऽत एव दम्भप्राधान्यमसत्यवचनसम्भवश्च। (संक्षिप्तकेति) संज्ञया

---

1. KSS. विशेषः।

2. KSS., NS. सम्भावनादिभिः।

3. KSS., NS. पूर्वस्थितानिपद्येत यत्र चान्यतमनायकस्तिष्ठेत्। तमपीह नर्मगर्भं वदन्ति नाट्यप्रयोगेऽस्मिन् ॥

आरभटप्रायगुणा तथैव बहुकपटवञ्चनोपेता[1] ।
दम्भानृतवचनवती त्वारभटी नाम विज्ञेया ॥६४॥
पुस्तावपात[2] प्लुतलङ्घितानि
च्छेद्यानि[3] मायाकृतमिन्द्रजालम् ।
चित्राणि युद्धानि[4] च यत्र नित्यं
तां तादृशीमारभटीं वदन्ति ॥६५॥
[5]षाड्गुण्यसमारब्धा हठातिसन्धानविद्रवोपेता ।
लाभालाभार्थंकृता विज्ञेया वृत्तिरारभटी ॥६६॥
संक्षिप्तकावपातौ[6] वस्तूत्थापनसथापि[7] संफेटः ।
एते ह्यस्या भेदा लक्षणमेषां प्रवक्ष्यामि ॥६७॥
अन्वर्थशिल्पयुक्तो बहुपुस्तोत्थानचित्रनेपथ्यः ।

---

क्षिप्तानि वस्तूनि विषयोऽस्येति संक्षिप्तकः । तानि वस्तूनि दर्शयति (अन्वर्थेति) । अर्थेन प्रयोजनेनानुगतः शिल्पयुक्ताः कुशलशिल्पिविरचिताः, अर्था यत्रेति । अत्रैव दिशं दर्शयति (बहुहुस्तेति) । वहु विपुलं, पुस्तस्योत्थानं प्रकटत्वं विचित्रं च नेपथ्यं खङ्गचर्मवर्मादि यत्र पुस्तयोगे। यथा मायाशिरोनिक्षेपे रामाभ्युदये चित्रं नेपथ्यम्, यथा (वा) श्वत्थाम्नः (वेण्याम्) ।

भयातिशयेन हर्षातिशयेन च क्षिप्रमेव प्रवेशनिर्गमौ यत्र पात्राणं, तथा, विद्रवो वाक्यादिकृतो विनिपातोऽवस्कन्दः ताभ्यां कृतं सम्भ्रमाचरणं आवेग-प्रधाना चेष्टा यत्र, सोऽवपातः, अवपतन्त्यस्मिन् पात्राणीति । यथा कृत्या-

---

1. KSS. बहुवचनकपटा च ।
2. KSS., NS. प्रस्तावपात ।
3. KSS., NS. चान्यानि ।
4. KSS., NS. युक्तानि ।
5. KSS. यां षडगुणसंरब्धा परातिसंधान । NS. does not read.
6. KSS. घातौ ।

संक्षिप्तवस्तुविषयो ज्ञेयः संक्षिप्तको नाम ॥६८॥
भयहर्षसमुत्थानं [1]विद्रवविनिपातसंभ्रमाचरणम् ।
क्षिप्रप्रवेशनिर्गममवपातमिमं विजानीयात्[2] ॥६९॥
सर्वरससमासकृतं सविद्रवाविद्रवाश्रयं वापि ।
नाट्यं विभाव्यते यत्तद्वस्तूत्थापनं ज्ञेयम् ॥७०॥
संरम्भसंप्रयुक्तो[3] बहुयुद्धनियुद्धकपटनिर्भेदः ।
शस्त्रप्रहारबहुलः सम्फेटो नाम विज्ञेयः ॥७१॥
एवमेता बुधैर्ज्ञेया वृत्तयो नाट्यसंश्रयाः ।
रसप्रयोगमासां च कीर्त्यमानं निबोधत ॥७२॥

---

रावणे षष्ठेऽङ्के "प्रविश्य खड्गहस्तः सप्रहारः पुरुष" इत्यतः प्रभृति यावदसौ निष्क्रान्तः ।

(वस्तूत्थापनमिति) वस्तूनां बहूना (मर्थाना) मुत्थापनं प्रसङ्गगतनिबन्धनं यत्र कार्ये तत्तथोक्तम् । कानि वस्तूनीत्याह सर्वरसेति । रस शब्देन स्थायिनो व्याभिचारिणश्च तेषां संक्षेपेण कृतं करणं यत्र, विद्रवैरग्नचाद्युपल्वैः सह, तैर्विहीनम् (च) यथा, तत्रैव (कृत्यारावणे) अङ्गदादभिद्रूयमाणाया मन्दोदर्या भयं, अङ्गदस्योत्साहः, रावणं दृष्ट्वा तस्यैव हि "एतेनापि सुरा जिता" इत्यादि वदतो हासः, रावणस्यातिक्रोधः, "यस्तातेन निगृह्य बालक इव प्रक्षिप्य कक्षान्तरे" इति वदतोऽङ्गदस्य जुगुप्साहासविस्मयरसा, विध्वंसनं नाट्यतीत्यत्र रावणस्य शोकः—इत्येवं विद्रवाश्रयं वस्तूत्थापनम् । तद्विपरीतं तु तत्रैव (कृत्यारावणे) द्वितीयेऽङ्के "नेपथ्ये कलकलः" इत्यतः प्रभृति यावत्सीतां प्रति रावणस्योक्तिः—"आ लोकपालानाक्रन्दसि" इत्यादि । भाविनो वस्तुनः समुत्थापनादपीदं तथोक्तं । तथा च तत्रैव (कृत्यारावणे द्वितीयेङ्के) ऋषीणामुक्तिः—

---

1. KSS., NS. विद्रुतसंभ्रान्तविविधवचनं च ।
2. KSS., NS. विजानन्ति ।
3. KSS., NS. समायुक्तो ।

[1]हास्यशृङ्गारबहुला कैशिकी परिचक्षिता ।
[2]सात्त्वती चापि विज्ञेया वीराद्भुतशमाश्रया ॥७३॥
[3]रौद्रे भयानके चैव विज्ञेयारभटी बुधैः ।
[4]बीभत्से करुणे चैव भारती संप्रकीर्तिता ॥७४॥
(न ह्येकरसजं काव्यं किंचिदस्ति प्रयोगतः ।
[5]भावो वापि रसो वापि प्रवृत्तिर्वृत्तिरेव वा ॥७५॥
सर्वेषां समवेतानां यस्य रूपं[6] भवेद्बहु ।
स मन्तव्यो रसः स्थायी शेषाः सञ्चारिणः[7] स्मृताः) ॥

वृत्यन्त एषोऽभिनयो मयोक्तो
वागङ्गसत्त्वप्रभवो यथावत् ।

---

दुरात्मन्, नेयं सीता स्वनाशाय कृत्येयं ह्रियते त्वया । इति सम्फेटस्योदाहरणं जटायुयुद्धादि सर्वम् (कृत्यारावणे) ।

अथासां वृत्तीनां संक्षिप्य स्वरूपमाह—हास्यशृङ्गारबहुला कैशिकीति सात्त्वती चापि विज्ञेया वीराद्भुतशमाश्रया । इति । अत्र शमशब्दः शान्तरस-परिग्रह इति तद्वादिनो मन्यन्ते । समाश्रयेत्यन्ये पठन्ति ।

---

1. KSS., NS. शृङ्गारे चैव हास्ये च वृत्तिः स्यात् कौशिकीति सा ।
2. KSS., NS. सात्त्वती नाम सा ज्ञेया वीररौद्राद्भुताश्रया, ।
3. KSS., NS. भयानके च बीभत्से रौद्रे चारभटी भवेत् ।
4. KSS., NS. भारती चापि विज्ञेया करुणाद्भुतसंश्रया
5. KSS. भावोऽपि रसो वापि प्रवृत्तिरेव वा ।
6. KSS. रूपं यस्य ।
7. KSS. सञ्चारिणो मता ।

आहार्यमेवाभिनयं प्रयोगे
वक्ष्यामि नेपथ्यकृतं तु भूयः[1] ॥७७॥

इति भरतीये नाट्यशास्त्रे वृत्तिविकल्पनं नामाध्यायो विंशः[2] ।

---

अस्याध्यायस्याभिनयशेषभूततां ख्यापयन्नध्यायार्थमुपसंहरति भाविनश्चार्थमासूत्रयति वृत्त्यन्त एष इति । वृत्तिरभिनयस्य दशरूपकात्मा विषयोऽपि अन्त इत्यभिनयस्य वृत्तयोऽन्तरमेकदेश आहार्यं इति शरीरव्यतिरिक्तं बाह्यमित्यर्थः नटस्य हि सत्त्वात्मा वागभिनयो व्याहरणीय एव साक्षात्प्रयत्नकृतत्वात् । अत एव तुशब्देन ततो व्यतिरेकमाहार्यमेव विशिनष्टि । नेपथ्यकृतं त्वाहार्यं वक्ष्यामीति भूयः कृतं विस्तार्येति शिवम् ।

नृसिंहगुप्तायतिनेत्थमत्र वृत्तिस्वरूपं प्रकटं व्यधायि ।
यस्य त्रिणेत्रेण हृदन्तरात्मवृत्तिस्वरूपं प्रकटं व्यधायि ॥

इति श्रीमहामाहेश्वराचार्याभिनवगुप्ताचार्यविरचितायां
भरतीयनाट्यवेदवृत्तावभिनवभारत्यां विंशो
वृत्त्यध्यायः समाप्तिमगमत्




1. KSS., NS. पुनश्च ।
2. KSS. reads here द्वाविंशोऽध्यायः

श्रीः

# नाट्यशास्त्र

## एकविंशोऽध्यायः[1]

— ० —

आहार्याभिनयं विप्रा [2]व्याख्यास्याम्यनुपूर्वशः ।
[3]यस्मात् प्रयोगः सर्वोऽयमाहार्याभिनये स्थितः ॥१॥
नानावस्थाः प्रकृतयः [4]पूर्वं नैपथ्यसाधिताः ।
अङ्गादिभिरभिव्यक्तिमुपगच्छन्त्ययत्नतः ॥२॥

---

### अभिनवभारती—एकविंशोऽध्यायः

#### आहार्याभिनयः

यस्य सङ्कल्पमात्रेण विश्वमाहार्यमद्भुतम् ।
तं मानसमहामूर्तिं वन्दे गिरिसुतामपि ॥

आहार्यस्य सर्वपश्चादभिधानं वागाद्यभिनयेभ्योऽस्य बहिरङ्गत्वादित्यानुपूर्व्यमिति केचित् । तच्चासत्, आवेदितपूर्वमाहार्यस्य प्राधान्यादेव त्वद्य सर्वानुग्राहकत्वं सर्वोपजीव्यताख्यापनाय पश्चादभिधानम् । तदेवानुपूर्वश इत्यनेनोक्तम् । तथा चाह—यस्मात् प्रयोगः सर्वोऽयमिति वागङ्गसत्त्वात्मक इति ।

अत्रैवोपपत्तिमाह—नानावस्था इत्यादि । नानाभूता या अवस्था रति-

---

1. KSS. reads here त्रयोविंशोऽध्यायः ।
2. KSS., NS. प्रवक्ष्यामि ।
3. KSS., NS. एवमेव प्रयोगोऽयं यतस्तस्मिन् प्रतिष्ठितः ।
4. KSS., NS. पूर्वनैपथ्यसूचिकाः ।

आहार्याभिनयो नाम ज्ञेयो नेपथ्यजो विधिः ।

तत्र कार्यः प्रयत्नस्तु नाट्यस्य शुभमिच्छता ॥३॥

[तस्मिन्यत्नस्तु कर्तव्यो नैपथ्ये [1]सिद्धिमिच्छता ।

नाट्यस्येह त्वलङ्कारो नैपथ्यं [2]यत्प्रकीर्तितम् ॥]४॥

चतुर्विधं तु नेपथ्यं पुस्तोऽलङ्कार एव च ।

तथाङ्गरचना चैव ज्ञेयं सज्जीवमेव च ॥५॥

पुस्तस्तु त्रिविधो ज्ञेयो नानारूपप्रमाणतः ।

सन्धिमो व्याजिमश्चैव वेष्टिमश्च[3] प्रकीर्तितः ॥६॥

---

शोकाद्या नानाश्रयभूताश्च याः प्रकृतयो धीरोदात्तादय उत्तमाधमप्रभृतयश्च ताः पूर्वं यत्नतो नैपथ्येन साधिताः प्रकाशिताः पश्चाद्रङ्गादिभिर्विभागं अनुभावविषयविभागं नामोपपत्ति देशकालादिविभागं चार्पयद्भिः स्फुटतमतामानीयन्ते । तेन समस्ताभिनयप्रयोगचित्रस्य भित्तिस्थानीयमाहार्यम् । तथा च समस्ताभिनयव्युपरमेऽपि नैपथ्यविशेषदर्शनाद्विशेषोऽवसीयत एव ।

यत्त्ववस्थान्तरयोगेऽभिनयान्तरवदाहार्यं न परिवर्तते तेन(केन?)प्रत्युत तथाभूतस्येयमवस्था प्राप्तेति स्थायिसूत्रानुस्मृतिसंपादनप्रावण्याद्रसं प्रत्यन्तरङ्गत्वमाहार्यस्यावेद्यते, तथा चाश्वत्थाम्नो युद्धवीररससम्पदोपेतस्यायं शोक आयात इति तथा येन [यदि] युद्धोचितोज्ज्वलधर्मपरिग्रहाद्युपासनं क्रियेतेत्यलं बहुना ।

ज्ञेयो लोके । नैपथ्यस्य (त्रिधिः अलङ्कारः) स इहाहार्याभिनयः, नाट्यस्य तु शुभमिति सिद्धिम् । (सन्धिमः) सन्धानं सन्धा तया निर्वृत्तिः, सदलादिरूपं क्रियते (इति) सन्धिमः । व्याज सूत्रस्याकर्षादिरूपः क्षेपस्तेन निर्वृत्तो व्याजिमः

---

1. KSS., NS. शुभ ।
2. KSS., NS. सम्प्रकीर्तितम् ।
3. NS. चेष्टिमश्च

[1]किलिञ्जचर्मवस्त्राद्यैर्यद्रूपं क्रियते बुधैः।
सन्धिमो नाम विज्ञेयः पुस्तो नाटकसंश्रयः ॥७॥
व्याजिमो नाम विज्ञेयो यन्त्रेण क्रियते तु यः।
[2]वेष्ट्यते चैव यद्रूपं वेष्टिमः[3] स तु संज्ञितः ॥८॥
शैलयानविमानानि चर्मवर्मध्वजा नगाः।
[4]ये क्रियन्ते हि नाट्ये तु स पुस्त इति संज्ञितः ॥९॥
अलङ्कारस्तु विज्ञेयो [5]माल्याभरणवाससाम्।
नानाविधः समायोगोप्यङ्गोपाङ्गविधिः स्मृतः ॥१०॥
[6]वेष्टिमं विततं चैव संघात्यं ग्रन्थिमं तथा।
प्रालम्बितं तथा चैव माल्यं पञ्चविधं स्मृतम् ॥११॥

---

उपरि जतुसिक्थकादिना वेष्टस्तेन निर्वृत्तो वेष्टिमः। भावप्रत्ययान्तन्निर्वृत्तार्थे इमपं स्मरन्ति (४-४-१० का)। किलिञ्जं भूर्जवेणुदलादि। रूपं क्रियत इति रूपतां नीयत इति यावत्। यन्त्रेणेति सूत्रादिप्रयोगेण सन्धिमादयः प्रकाराः। क्वोपयुज्यन्त इत्याह—शैलेत्यादि।

समायोग इति योजना; स चाङ्गेषु शिरोहस्तादिषु उपाङ्गेषु च ललाटाङ्गुल्यादिषु निर्मितः। वेष्टिमं तृणवेष्टनया निर्मितं बहुमालावेष्टनकृतं वा। विततमित्यावेष्टितान्योन्यश्लिष्टमालासमूहात्मकं वस्त्रधारणभयेनोम्भितं वा। सङ्घात्यं वृत्तं वा आस्यच्छिाद्रान्तःप्रक्षिप्तसूत्रं बहुपुष्पगुच्छोम्भितं वा। ग्रन्थिमं ग्रन्थिभिरुम्भितं वा। प्रालम्बितमिति जालादिपर्यन्तव्याप्तिकम्। आवे-

---

1. KSS., NS. किलिञ्चवस्त्रचर्माद्यैः।
2. KSS,. NS. चेष्ट्यते।
3: KSS., NS. चेष्टिमः।
4. KSS., NS. यानि।
5. KSS., NS. माला।
6. KSS., NS. चेष्टिमम्

चतुर्विधं तु विज्ञेयं [1]नाट्ये ह्याभरणं बुधैः ।
आवेध्यं वन्धनीयं च [2]क्षेप्यमारोप्यमेव च ॥१२॥
आवेध्यं कुण्डलादीह यत्स्याच्छ्रवणभूषणम् ।
आरोप्यं हेमसूत्रादि हाराश्च विविधाश्रयाः ॥१३॥
श्रोणीसूत्राङ्गदे[3] मुक्तावन्धनीयानि सर्वदा[4] ।
प्रक्षेप्यं नूपुरं विद्याद्वस्त्राभरणमेव च ॥१४॥
भूषणानां विकल्पं हि[5] पुरुषस्त्रीसमाश्रयम् ।
नानाविधं प्रवक्ष्यामि देशजातिसमुद्भवम् ॥१५॥
चूडामणिः [6]समकुटः शिरसो भूषणं स्मृतम् ।
कुण्डलं मोचकं [7]कीलः कर्णाभरणमिष्यते ॥१६॥
मुक्तावली हर्षकं च [8]सूत्रकं कण्ठभूषणम् ।
[9]वेतिकाङ्गुलिमुद्रा च स्यादङ्गुलिविभूषणम् ॥१७॥

---

ध्यानीनि स्वयमेव व्याचष्टे आवेध्यं कुण्डलादीत्यादिना । विविधाश्रया इति लतासंख्यादिभेदेन बहुभेदा इत्यर्थः । चूडामणिः शिरोमध्ये । मकुटो ललाटोर्ध्वे । कुण्डलमधरपाल्याम् । मोचकं कर्णशष्कुल्या मध्यच्छिद्रे कृतम्, कीला ऊर्ध्वच्छिद्रे उत्तरकर्णिकेति प्रसिद्धा । हर्षकमिति समुद्गकं सर्पादिरूपतया प्रसिद्धम् । सूत्रकमिति गुच्छग्रीवासूत्रादितया प्रसिद्धम् । वेतिकेति सूक्ष्मकटकरूपा अङ्गुलिमुद्रा पक्षिपद्माद्याकारेणोपेता ।

---

1. KSS., NS. देहस्य ।
2. KSS., NS. प्रक्षेप्यारोप्यके तथा ।
3. KSS , NS. श्रोणीसूत्राङ्गदैः ।
4. KSS., NS. निर्दिशेत् ।
5. KSS., NS. च ।
6. KSS., NS. समुकुटः ।
7. GOS. कीला ।
8. NS. ससूत्रं KSS. सत्सूत्रं ।
9. KSS., NS. केटकोऽङ्गुलि ।

[1]हस्तली वलयं चैव बाहुनालीविभूषणम् ।
[2]रुचकश्चूलिका कार्या मणिबन्धविभूषणम् ॥१८॥
[3]केयूरे अङ्गदे चैव कूर्परोपरि भूषणम्[4] ।
[5]त्रिसरश्चैव हारश्च [6]तथा वक्षोविभूषणम् ॥१९॥
[7]व्यालम्बमौक्तिको हारो माला चैवाङ्गभूषणम् ।
[8]तलकं सूत्रकं चैव भवेत्कटिविभूषणम् ॥२०॥
अयं पुरुषनिर्योगः कार्यस्त्वाभरणाश्रयः ।
देवानां पार्थिवानां च पुनर्वक्ष्यामि योषिताम् ॥२१॥

---

रुचक इति करगोलके विततः तत ऊर्ध्वे चूलिकेति प्रसिद्धो निकुञ्चकोऽग्रबाहुस्थाने—एतन्मणिबन्धविभूषणम्, केयुरः कूर्परस्योर्ध्वतः, तयोरूर्ध्वे त्वङ्गदे । त्रिसरः मुक्तालतात्रयेण । तलकं नाभेरधः तस्याप्यधः सूत्रकम् । पुरुषनिर्योगः औचित्यमस्य । आभरणाश्रयः आभरणविधिरित्यर्थः ।

ननु सर्वः पुरुषोऽनेन भूष्यत इत्याशङ्क्याह देवानां पार्थिवानां चेति । शिखाव्यालः नागः ग्रन्थिभिरुपनिबद्धो मध्ये कर्णिकास्थानीयः, तस्यैव दलसन्धानतया चित्ररचनानि वर्तुलानि पत्राणि पिण्डीपत्राणि । चूडामणिः शिरोमध्ये, ततो मकरपत्रं (मकरिका), ततो ललाटान्तमुक्ताजालिका तोरणं जालिकादिरूपेण प्रसिद्धा । सर्पस्यैव वा शिरस एकमेव सुवर्णमुक्तामणि-

---

1. KSS., NS. हस्तवी ।
2. KSS., NS. रुचकोच्चितकैश्चैव ।
3. KSS., NS. केयूरमङ्गदं, ।
4. GOS. भूषणे ।
5. KSS. त्रिरसं ।
6. KSS., NS. भवेत् ।
7. KSS., NS. व्यालम्बिमौक्तिका हारा माल्याद्या देहभूषणम् ।
8. KSS., NS. तरलं ।

शिखापाशं शिखाव्यालः[1] पिण्डीपत्रं[2] तथैव च ।
चूडामणिर्मकरिका मुक्ताजालगवाक्षिकम्[3] ॥२२॥
शिरसो भूषणं चैव विचित्रं शीर्षंजोलकम्[4] ।
[5]कण्डकं शिखिपत्रं च वेणीपुच्छ[6]: सदोरकः ॥२३॥
ललाटतिलकं[7] चैव नाना शिल्पप्रयोजितम्[8] ।
[9]भ्रूगुच्छोपरिगुच्छश्च कुसुमानुकृतिस्तथा[10] ॥२४॥
कर्णिका कर्णवलयं तथा स्यात्पत्रकर्णिका ।
[11]कुण्डलं कर्णमुद्रा च [12]कर्णोत्कीलकमेव च ॥२५॥
[13]नानारत्नविचित्राणि [14]दन्तपत्राणि चैव हि ।
कर्णयोर्भूषणं [15]ह्येतत्कर्णपूरस्तथैव च ॥२६॥

---

चित्रितम् । खेला (डोला?) प्रायं शीर्षतः जोलकं भूषणं शिखिपत्रं मयूरपिञ्छाकारो विचित्रवर्णमणिरचितः कर्णावतंसकः । कर्णिकेत्यादिना विकल्पतः कर्णाभरणान्यपि तु स्थानान्तरभेदात्समुच्चयेनेत्याहुः ।

---

1. KSS., NS. जालं ।
2. KSS., NS. पिण्डपात्रं ।
3. KSS., NS. मुक्ताजालं गवाक्षकम् ।
4. KSS., NS. जालकम् ।
5. NS. कुण्डलं शिखिपात्रं ।
6. NS. गुच्छः, KSS. वेणीकञ्ज-सरोचकम् ।
7. KSS. तिलकश्चैकः NS. तिलकश्च ।
8. KSS. प्रयोजितः NS. प्रयोजिताः ।
9. KSS., NS. भ्रूकक्षोपरि, भ्रुवोश्चोपरि ।
10. KSS., NS. भवेत् ।
11. KSS., NS. आनेष्टितः कर्णमुद्रा ।
12. KSS. कर्णोत्कीलक एव च, NS. कर्णोत्पलकमेव ।
13. KSS. नानाचित्र ।
14. KSS. रत्नपात्राणि ।
15. KSS. NS. कार्यम् ।

[1]तिलकाः पत्रलेखाश्च भवेद्गण्डविभूषणम् ।
त्रिवणी चैव विज्ञेयं भवेद्वक्षोविभूषणम् ॥२७॥
नेत्रयोरञ्जनं [2]ज्ञेयमधरस्य च रञ्जनम् ।
दन्तानां [3]विविधो रागश्चतुर्णां शुक्लतापि वा[4] ॥२८॥
रागान्तरविकल्पोऽथ[5] शोभनेनाधिकोज्ज्वलः ।
मुग्धानां सुन्दरीणां च मुक्ताभासितशोभनाः[6] ॥२९॥
सुरक्ता वापि दन्ताः स्युः पद्मपल्लवरञ्जनाः ।
अश्मरागोद्द्योतितः स्यादधरः पल्लवप्रभः ॥३०॥
विलासश्च भवेत्तासां सविभ्रान्तनिरीक्षितम् ।
मुक्तावली व्यालपङ्क्तिर्मञ्जरी रत्नमालिका ॥३१॥
रत्नावली सूत्रकं च ज्ञेयं कण्ठविभूषणम् ।
[7]द्विसरस्त्रिसरश्चैव चतुस्सरकमेव च ॥३२॥
तथा शृङ्खलिका चैव भवेत्कण्ठविभूषणम् ।
[8]अङ्गदं वलयं चैव बाहुमूलविभूषणम् ॥३३॥
नाना [9]शिल्पकृताश्चैव हारा वक्षोविभूषणम् ।

विलासः । तेनायमर्थः—एवं भूतेन दन्ताधररागवैचित्र्ये सति, सविभ्रान्त-

1. KSS., NS. तिलकः पत्रलेखा च ।
2. KSS., NS. कार्यं ।
3. KSS., NS. विविधारागाः ।
4. KSS., NS. तथा ।
5. NS. अर्थ ।
6. KSS., NS. मुक्ताभाः सितशोभनाः ।
7. KSS. द्विरसस्त्रिरसश्चैव चतूरसकमेव च ।
8. NS. KSS., read this line after मणिजाला etc.
9. NS. रत्न ।

मणिजालावनद्धं च भवेत् स्तनविभूषणम् ॥३४॥
खर्जूरकं सोच्छितिकं[1] बाहुनालीविभूषणम् ।
[2]कलापी कटकं शङ्खो हस्तपत्रं सपूरकम् ॥३५॥
मुद्राङ्गुलीयकं चैव[3] ह्यङ्गुलीनां विभूषणम् ।
[4]मुक्ताजालाढ्यतलकं मेखला काञ्चिकापि वा ॥३६॥
रशना च कलापश्च भवेच्छ्रोणीविभूषणम् ।
एकयष्टिर्भवेत्काञ्ची मेखला त्वष्टयष्टिका ॥३७॥
[5]द्विरष्टयष्टी रशना कलापः पञ्चविंशकः ।
द्वात्रिंशच्च चतुःषष्टिः शतमष्टोत्तरं तथा ॥३८॥
मुक्ताहारा भवन्त्येते देवपार्थिवयोषिताम् ।
[6]नूपुरः किङ्किणीकाश्च घण्टिका रत्नजालकम् ॥३९॥

---

निरीक्षितं यत् स्मितं तद्भवेदतीवहृद्यं (विलासः) संपाद्यत इति तावत् । तलकमिति कवाटद्वययोजितम् ।

यष्टिरिति लता । नूपुरो जान्वधः । किङ्किणीका घण्टिकालग्ने (ग्रा?) । रत्नजालकं (प्रपदा)च्छादकम् । सघोषे सशब्दे कटके । (अङ्गुष्ठ) तिलका इति विचित्ररचनाकृताः । आकेशादिति शिखापाशः शिखाव्याल इत्यतःप्रभृतीत्यर्थः । आनखादिति अलक्तकरागपर्यन्तमिति यावत् । आगम इत्युपादानकारणमिति यावत् । प्रमाणमिति अङ्गुल्यादिपरिमाण (संमितत्वम् । रूपनिर्व-

---

1. KSS., NS. वर्जूरं स्वेच्छितीकश्च ।
2. KSS., NS. कटकं कल शाखा च ।
3. KSS., NS. च स्यात् ।
4. KSS., NS. काञ्ची मौक्तिकजालाढ्या कुलकं मेखलं तथा ।
5. KSS, NS. रशना षोडश ज्ञेया कलापः पञ्चविंशतिः ।
6. KSS., NS. नूपुरः किङ्किणीकं च रत्नजालकमेव च ।

[1]सघोषे कटके चैव गुल्फोपरिविभूषणम् ।
[2]जङ्घयोः पादपत्रं स्यादङ्गुलीष्वङ्गुलीयकम् ॥४०॥
[3]अङ्गुष्ठतिलकाश्चैव पादयोश्च विभूषणम् ।
[4]तथालक्तकरागश्च नानाभक्तिनिवेशितः ॥४१॥
अशोकपल्लवच्छायः स्यात् स्वाभाविक एव च ।
एतद्विभूषणं नार्या आकेशादानखादपि ॥४२॥
यथाभावरसावस्थं विज्ञेयं द्विजसत्तमाः[5] ।
आगमश्च प्रमाणं च रूपनिर्वर्णनं तथा ॥४३॥
[6]विश्वकर्ममतात्कार्यं सुबुद्धयापि प्रयोक्तृभिः ।
न हि शक्यं सुवर्णेन मुक्ताभिर्मणिभिस्तथा ॥४४॥
[7]स्वाधीनमिति रुच्यैव कर्तुमङ्गस्य भूषणम् ।
[8]विभागतोऽभिप्रयुक्तमङ्गशोभाकरं भवेत् ॥४५॥
यथा स्थानान्तरगतं भूषणं रत्नसंयुतम् ।

---

र्णन) मिति शुल्कादि विवर्तनं (यथास्वभावम्) । विश्वकर्मणा प्रोच्यते यादृङ्निर्दिष्टं तादृक्कार्यमित्यर्थः । सुबुद्धयेति लोकप्रसिद्धापीत्यर्थः ।

---

1. KSS., NS. संघोषकटकं ।
2. NS. पदयोः ।
3. KSS., NS अङ्गुष्ठे तिलकं ।
4. KSS., NS. तथैवालक्त ।
5. KSS., NS. विज्ञायैवं प्रयोजयेत् ।
6. KSS., NS. विश्वकर्मोद्भवं कार्यं बुध्वा चापि प्रयोजयेत् ।
7. KSS., NS. स्वाधीनं चेप्सया चैव ।
8. KSS., NS. विभावतो ।

न तु नाट्यप्रयोगे तु[1] कर्तव्यं भूषणं बहु[2] ॥४६॥
खेदं जनयते तद्धि सव्यायतविचेष्टनात् ।
गुरुभारावसन्नस्य स्वेदो मूर्छा च जायते ॥४७॥
गुर्वाभरणसन्नो हि चेष्टां न कुरुते पुनः ।
[3]तस्मात्तनुत्वचकृतं सौवर्णं भूषणं भवेत् ॥४८॥
[4]रत्नवज्जतुबद्धं वा न खेदजननं भवेत् ।
स्वेच्छया भूषणविधिर्दिव्यानामुपदिश्यते[5] ॥४९॥
यत्नभावविनिष्पन्नं मानुषाणां विभूषणम् ।
[6][वेष्टितं विततं चैव सङ्घात्य ग्रन्थिमं तथा ॥५०॥
लम्बशोभि तथा चैव माल्यं पञ्चविधं स्मृतम् ।
आच्छादनं बहुविधं नानापत्तनसंभवम् ॥५१॥
तज्ज्ञेयं त्रिप्रकारं तु शुद्धं रक्तं विचित्रितम् ।
दिव्यानां भूषणविधिर्य एष परिकीर्तितः ॥५२॥
मानुषाणां च कर्तव्यो नानादेशसमाश्रयः] ।
[7]भूषणैश्चापि वेषैश्च नानावस्थासमाश्रयैः[8] ॥५३॥

---

पत्तनं देशः । शुद्धमिति शुक्लवर्णकम् । रक्तमिति कुसुम्भनील्याद्यन्यतमोपरक्तम् । विचित्रमिति बहुवर्णम् । विभक्तिः विभागः ।

---

1. KSS., NS. प्रयोगेषु ।
2. GOS. गुरु ।
3. KSS., NS. तस्मान्न सम्यक् च ।
4. KSS, NS. जतुपूर्णाल्परत्नं तु ।
5. KSS., NS. यदभावाद्विनिष्पन्ना ।
6. KSS., NS. do not read वेष्टितं···नानादेशसमाश्रयः ।
7. KSS. भूषणं चापि वेषस्तु ।
8. KSS. समाश्रयम् ।

दिव्याङ्गनानां कर्तव्या विभक्तिः स्वस्वभूमिजा ।
विद्याधरीणां यक्षीणामप्सरोनागयोषिताम् ॥५४॥
ऋषिदैवतकन्यानां वेषैर्नानात्वमिष्यते ।
तथा च सिद्धगन्धर्वराक्षसासुरयोषिताम् ॥५५॥
दिव्यानां नरनारीणां तथैव च शिखण्डकम् ।
शिखापुटशिखण्डं[1] तु मुक्ताभूयिष्ठभूषणम् ॥५६॥
विद्याधरीणां कर्तव्यः शुद्धो वेषपरिच्छदः ।
[2]यक्षिण्योऽप्सरसश्चैव कार्या रत्नाविभूषणाः ॥५७॥
[3]समस्तासां भवेद्वेषो यक्षीणां केवलं शिखा ।
[4]दिव्यानामिव कर्तव्यं नागस्त्रीणां विभूषणम् ॥५८॥
मुक्तामणिलताप्रायाः[5] फणास्तासां तु केवलाः ।
कार्यं तु मुनिकन्यानामेकवेणीधरं शिरः ॥५९॥
न चापि [6]भूषणविधिस्तासां वेषो वनोचितः ।
मुक्तामरकतप्रायं मण्डनं सिद्धयोषिताम् ॥६०॥
तासां चैव तु कर्तव्यं पीतवस्त्रापरिच्छदम् ।
पद्मरागमणिप्रायं गन्धर्वाणां विभूषणम् ॥६१॥

---

तासामिति (श्लो-५९) नागयोषिताम् ।

---

1. KSS., NS. शिखण्डा ।
2. KSS., NS. यक्षिण्यप्सरसां चैव कार्यं रत्नैर्विभूषणम् ।
3. KSS., NS. यस्त्वासां ।
4. KSS., NS. दिव्यवत्संप्रकर्तव्यं नागीनां तु विभूषणम् ।
5. KSS., NS. प्रायं फलं तासां तु केवलम् ।
6. KSS., NS. भूषणं कार्यं तासामत्यर्थतो भवेत् ।

[1]वीणाहस्तश्च कर्तव्यः कौसुम्भवसनस्तथा ।
इन्द्रनीलैस्तु कर्तव्यं राक्षसीनां विभूषणम् ॥६२॥
[2]सितदंष्ट्रा च कर्तव्या कृष्णवस्त्रपरिच्छदम्[3] ।
वैडूर्यमुक्ताभरणाः कर्तव्या सुरयोषिताम्[4] ॥६३॥
शुकपिञ्छनिभैर्वस्त्रैः कार्यस्तासां परिच्छदः ।
[5]पुष्परागैश्च मणिभिः क्वचिद्वैडूर्यभूषितम्[6] ॥६४॥
दिव्यवानरनारीणां कार्यो[7]नीलपरिच्छदः ।
एवं शृङ्गारिणः[8] कार्या वेषा दिव्याङ्गनाश्रयाः ॥६५॥
अवस्थान्तरमासाद्य शुद्धाः कार्याः पुनस्तथा ।
मानुषीणां तु कर्तव्या नानादेशसमुद्भवाः ॥६६॥
[9]वेषाभरणसंयोगान् गदतस्तान्निबोधत ।
[10]आवन्त्ययुवतीनां तु शिरस्सालककुन्तलम् ॥६७॥
गौडीनामलकप्रायं सशिखापाशवेणिकम् ।
आभीरयुवतीनां तु द्विवेणीधर [11]एव तु ॥६८॥

---

1. KSS., NS. वीणाहस्ताश्च कर्तव्याः कौसुम्भवसनास्तथा ।
2. KSS., NS. सिता दंष्ट्रा ।
3. KSS., NS. परिच्छदः ।
4. KSS., NS. योषितः ।
5. GOS. पुण्यरागैस्तु ।
6. GOS. भूषितैः ।
7. KSS., NS. कार्यो ।
8. KSS., NS. कार्यो वेषो ।
9. KSS., NS. वेषास्त्वाभरणोपेतास्तांश्च ।
10. KSS., NS. अवन्ति ।
11. KSS., NS. धरमेव च ।

शिरःपरिगमः[1] कार्यो[2] नीलप्रायमथाम्बरम् ।
तथा पूर्वोत्तरस्त्रीणां [3]समुन्नद्धशिखण्डकम् ॥६९॥
[4]आकेशाच्छादनं तासां [5]देशकर्मणि कीर्तितम् ।
[6]तथैव दक्षिणस्त्रीणां कार्यमुल्लेख्यसंश्रयम्[7] ॥७०॥
कुम्भी[8] बन्धकसंयुक्तं तथावर्तललाटिकम् ।
[गणिकानां तु कर्तव्यमिच्छाविच्छित्ति मण्डनम् ॥]७१
देशजातिविधानेन[9] शेषाणामपि कारयेत् ।
वेषं तथा ह्याभरणं क्षुरकर्म परिच्छदम् ॥७२॥
[10][आगमं चापि नैपथ्ये नाट्यस्यैवं प्रयोजयेत ।]
[11]अदेशयुक्तो वेषो हि न शोभां जनयिष्यति ॥७३॥

---

(सालककुन्तलमिति) अलकाः स्थाने कुन्तलाः कुञ्चिताः केशा यत्र तत्तथोक्तम् । नीलप्रायं वस्त्रमित्याभीरीणामेव ।

हृदयं व्याप्नोति हृद्यत एवेति वेषः केशरचनादिः । आ समन्तात् भ्रियते पोष्यते कान्तिर्येन तदाभरणं शिखाव्यालादि । क्षुरकर्म अलकादियोजना । :परिच्छदः विचित्रवस्त्रयोगः । एतद्वेषादि प्रलम्भेन ।

---

1. NS. परिगतं ।
2. KSS., प्रायो NS. कार्यं ।
3. KSS., NS. समुद्धत शिखण्डिकम् ।
4. KSS., NS. आकेशं छादनं ।
5. KSS., NS. वेष ।
6. KSS., NS. तथा च ।
7. KSS., NS. संज्ञितम् ।
8. KSS., NS. पदक ।
9. KSS., NS. विशेषेण देशामामपि ।
10. KSS., NS. do not read.
11. KSS., NS. अदेशजो हि वेषस्तु ।

मेखलोरसि बद्धा[1] तु हास्यं समुपपादयेत् ।
तथा प्रोषित[2] कान्तासु व्यसनाभिहतासु च ।।७४।।
[3]वेषो वै मलिनः कार्य एकवेणीधरं शिरः ।
विप्रलम्भे तु नार्यास्तु शुद्धो वेषो भवेदिह ।।७५।।
[4]नात्याभरणसंयुक्तो न चापि मृजयान्वितः ।
एवं स्त्रीणां [5]भवेद्वेषो देशावस्थासमुद्भवः ।।७६।।
पुरुषाणां पुनश्चैव वेषान्वक्ष्यामि तत्त्वतः ।
तत्राङ्गरचना पूर्वं कर्तव्या नाट्योक्तृभिः ।।७७।।
[6]ततःपरं प्रयोक्तव्या वेषा देशसमुद्भवाः ।
सितो नीलश्च पीतश्च चतुर्थो रक्त एव च ।।७८।।
एते स्वभावजा वर्णा यैः कार्यं त्वङ्गवर्तनम् ।
संयोगजाः पुनश्चान्ये उपवर्णा भवन्ति हि ।।७९।।
तानहं संप्रवक्ष्यामि यथाकार्यं प्रयोक्तृभिः ।
सितनीलसमायोगे कारण्डव इति स्मृतः ।।८०।।

---

देशोऽवन्त्यादि, अवस्था रतिशोकाद्याः । तत्रेति पुरुषेष्वेव । अङ्गनानां रूपपरिवर्तनसंपादनात्मकवर्णवर्तना कर्तव्या न स्त्रीपात्रेष्विति यावत् । संयोगजा इति वर्णद्वयश्लेषेणोत्थापिताः, उपवर्णास्तु बहुवर्णमिश्रणेनेत्यर्थः ।

---

1. KSS., NS. बन्धे च (तु) ह्रास्यायैवोपजायते ।
2. NS. कान्तायां व्यसनाभिहताश्च याः ।
3. KSS., NS. स्यान्मलिनस्तासां ।
4. KSS., NS. नाना ।
5. KSS., NS. प्रयुक्तव्या ।
6. KSS., NS. do not read three verses here. ततः परं······ कारण्डव इति स्मृतः ।

सितपीत[1]समायोगात्पाण्डुवर्णः प्रकीर्तितः ।
सितरक्तसमायोगे[2] पद्मवर्णः प्रकीर्तितः[3] ।।८१।।
पीतनीलसमायोगाद्धरितो नाम जायते ।
नीलरक्तसमायोगात्कषायो नाम जायते ।।८२।।
रक्तपीतसमायोगाद्गौरवर्ण इति स्मृतः[4] ।
एते संयोगजा वर्णा ह्युपवर्णास्तथापरे ।।८३।।
त्रिचतुर्वर्णसंयुक्ता बहवः [5]संप्रकीर्तिताः ।
बलस्थो यो भवेद्वर्णस्तस्य भागो भवेत्ततः ।।८४।।
दुर्बलस्य च भागौ द्वौ नीलं मुक्त्वा प्रदापयेत्[6] ।
नीलस्यैको भवेद्भागश्चत्वारोऽन्ये तु वर्णके ।।८५।।
बलवान्सर्ववर्णानां नील एव प्रकीर्तितः ।
एवं वर्णविधिं ज्ञात्वा नानासंयोगसंश्रयम्[7] ।।८६।।

---

बलस्थ इत्यभिभवनकारी, ततोऽन्यो वर्णो द्विगुण इति, अस्यापवादमाह नीलवर्णावृते इति। तत्र तु यो भागविधिस्तं दर्शयति नीलस्यैक इति। वर्णके नीलस्य भाग इत्यर्थः। वर्तनाशब्दं पर्यायैर्व्याचष्ठे वर्तनाच्छादनमिति। प्रकृतिस्थितमिति देवमानुषादिस्वभावविभागेनावस्थितमित्यर्थः। वर्तनस्य प्रयोजनमाह यथा जन्तुः स्वभावं स्वमिति। जन्तुरिति जीवात्मेत्यर्थः स च

---

1. KSS., NS. नील ।
2. KSS., NS. योगात् ।
3. KSS., NS. इति स्मृतः ।
4. KSS., NS. गौर इत्यभिधीयते ।
5. KSS., NS. परिकीर्तिताः ।
6. KSS., NS. नीलमुक्तं प्रपादयेत् ।
7. KSS., NS. सम्भवम् ।

ततः [1]कुर्याद्यथायोगमङ्गानां वर्तनं बुधः ।
वर्तनाच्छादितं[2] रूपं स्ववेषपरिवर्जितम्[3] ॥८७॥
नाट्यधर्मप्रवृत्तं तु[4] ज्ञेयं तत्प्रकृतिस्थितम् ।
स्ववर्णमात्मनश्छाद्यं[5] वर्णकैर्वेषसंश्रयैः ॥८८॥
[6]आकृतिस्तस्य कर्त्तव्या यस्य प्रकृतिरास्थिता ।
यथा[7] जन्तुः स्वभावं स्वं परित्यज्यान्यदैहिकम् ॥८९॥
[8]तत्स्वभावं हि भजते देहान्तरमुपाश्रितः
[9]वेषेण वर्णकैश्चैवच्छादितः पुरुषस्तथा ॥९०॥
[10]परभावं प्रकुरुते यस्य वेषं समाश्रितः[11] ।
देवदानवगन्धर्वयक्षराक्षसपन्नगाः ॥९१॥

---

शुद्धनिर्मलानन्तचिदानन्दप्रकाशः स्वातन्त्र्यरूपं स्वमनपायिनमपि स्वभावं परित्यज्यान्यद् व्यतिरिक्तमपि दैहिकं देहभवः शरीरकरणोचितं तत्स्वभावं भजते, यतो देहान्तरं तद्देहविशेष उपसमीपे आ समन्तात् श्रितः अतिनैकट्येन तदात्मवृत्त्या प्रतिपन्न इत्यर्थः ।

---

1. KSS., NS. तु वर्तना कार्या नानारूपसमाश्रया ।
2. GOS. वर्तनाच्छादनं ।
3. KSS., NS. वर्तितम् ।
4. KSS., NS. धर्मप्रवृत्तेन ।
5. KSS. चान्यं ।
6. KSS., NS. प्रकृतिर्वास्य कर्त्तव्या तस्य प्रकृतिमास्थिताः ।
7. KSS., NS. नरः ।
8. KSS., NS. पराभवं प्रकुरुते देहभावसमाश्रयम् ।
9. KSS. वर्णकैश्चैव वेशैश्च । NS. वर्णकैश्चापि वेशैश्च ।
10. KSS., NS. परप्रभावं कुरुते ।
11. वेषसमाश्रयः ।

[1]प्राणिसंज्ञाः स्मृता ह्येते जीवबन्धाश्च येऽपरे।
[स्त्रीभावाः पर्वताः नद्यः[2] समुद्रा वाहनानि च ।।९२।।
नानाशस्त्राण्यपि तथा विज्ञेयाः प्राणिसंज्ञया] ।
शैलप्रासादयन्त्राणि चर्मवर्मध्वजास्तथा ।।९४।।
नानाप्रहरणाद्याश्च तेऽप्राणिन इति स्मृताः ।
अथवा कारणोपेता भवन्त्येते शरीरिणः ।।९४।।
वेषभाषाश्रयोपेता नाट्यधर्ममवेक्ष्य तु ।
वर्णानां तु विधिं ज्ञात्वा वयः प्रकृतिमेव च ।।९५।।
कुर्यादङ्गस्य रचनां देशजातिवयःश्रिताम् ।
देवा गौरास्तु विज्ञेया यक्षाश्चाप्सरसस्तथा ।।९६।।
[3]रुद्रार्कद्रुहिणस्कन्दास्तपनीयप्रभाः स्मृताः ।
सोमो बृहस्पतिः शुक्रो वरुणस्तारकागणाः ।।९७।।

---

एतदुक्तं भवति—यथा परमात्मा स्वचैतन्यप्रकाशमत्यजन्नपि देहकञ्चुकोचितचित्तवृतिरूषितमिव स्वरूपमादर्शयति, तथा नटोऽपि आत्मावष्टम्भमत्यजन्नेव स्थाने लयतालाद्यनुसरणाद्यायोगाद् देहस्थानीयेन वर्णनादिवेषपरिवर्तने(न) तदुचितस्वभावालिङ्गितमिव स्वात्मानं सामाजिकान् प्रति दर्शयति, प्रेक्षकपक्षे न नटाभिमानस्तत्र हि रामाभिमान इति दर्शयति। एतदाशयेनैवास्माभिस्तत्र तत्र प्रतीतिरेव व्याख्याता रसाध्यायादौ ।

सजीवमाहार्यभेदं व्याचष्टे देवदानवगन्धर्वेत्यादिना, शैलप्रसादादीनि निर्जीवत्वे प्रस्तुतत्वेन परिगणितान्यपि अवस्थाविशेषेषु नाट्यधर्मेण सजीवत्वेऽपीत्याह शैलेत्यादिना, अथवा कारणोपेता इत्यादिना च ।

अङ्गरचनानि विभजति वर्णानामिति गौरादीनाम् ।

---

1. KSS., NS. ते प्राणिन इति प्रोक्ता जीवबन्धाश्च ये त्विह ।
2. KSS., पर्वताभार्यं । NS. does not read it.
3. KSS., NS. रुद्राः सद्रुहिणस्कन्दास्तपनीय समप्रभाः ।

[1]समुद्रहिमवद्गङ्गाः श्वेता हि स्युर्बलस्तथा ।
रक्तमङ्गारकं विद्यात् पीतौ बुधहुताशनौ ॥९८।
नारायणो नरश्चैव श्यामो नागश्च[2] वासुकिः ।
दैत्याश्च दानवाश्चैव राक्षसा गुह्यका नगाः ॥९९॥
पिशाचा [3]जलमाकाशमसितानि तु वर्णतः ।
[4]भवन्ति षट्सु द्वीपेसु पुरुषाश्चैव वर्णतः ॥१००॥
कर्तव्या नाट्यप्रयोगेन[5] निष्टप्तकनकप्रभाः ।
जम्बूद्वीपस्य वर्षे तु नानावर्णाश्रया नराः ॥१०१॥
उत्तरांस्तु कुरूंस्त्यक्त्वा ते चापि कनकप्रभाः ।
[6]भद्राश्वपुरुषाः श्वेताः कर्तव्या वर्णतस्तथा[7] ॥१०२॥

---

नगाः पर्वताः। जलमाकाशमिति तदधिष्ठात्री देवतेह विवक्षिता। जम्बूद्वीपस्य वर्ष इति भारते। ते चापीति उत्तरकुरवः।

पितरस्तु समा नरा इति तुः स्वार्थे पितरो नराश्च तुल्या इत्यर्थः। कुकर्मिण इति कुत्सितं निन्दितं कर्म येषाम्। आयस्तं शरीरक्लेशबहुलं कर्म येषामित्यर्थः। कुजातयो धीवरडोम्बाद्याः। बदरप्रभावत्त्वेऽप्यपवादमाह तपः स्थिना असिता इति। अनेन तु ऋषीणामपि तपोनिरतानामसितत्व-मित्यपौनरुक्त्यम्।

---

1. KSS., NS. समुद्रो हिमवान् गङ्गा श्वेता कार्यास्तु वर्णतः।
2. KSS., NS. श्यामवर्णोऽथ।
3. KSS., NS. यम आकाशं श्यामवर्णाः।
4. KSS., NS. वसन्ति सप्तद्वीपेषु ये नरा वर्णतस्तु ते।
5. KSS., NS. तत्त्वज्ञैः।
6. KSS., NS. भद्राश्च वपुषा।
7. NS. वर्णतो बुधैः।

[1]केतुमाले नरा नीला गौराः शेषेषु कीर्तिताः ।
[2]नानावर्णाः स्मृता भूता गन्धर्वा यक्षपन्नगाः ॥१०३॥
[3]विद्याधरास्तथा चैव पितरस्तु समा नराः ।
पुनश्च भारते वर्षे तांस्तान्वर्णान्निबोधत ॥१०४॥
राजानः पद्मवर्णास्तु[4] गौराः श्यमास्तथैव च ।
ये चापि सुखिनो मर्त्या गौराः कार्यास्तु वै[5] बुधैः ॥१०५॥
कुकर्मिणो ग्रहग्रस्ताः व्याधितास्तपसि स्थिताः ।
आय[7]स्तकर्मिणश्चैव ह्यसिताश्च कुजातयः ॥१०६॥
ऋषयश्चैव कर्तव्या नित्यं तु वदरप्रभाः ।
तपःस्थिताश्च ऋषयो [8]नित्यमेवासिता बुधैः ॥१०७॥
कारणाव्यपदेशेन तथा चात्मेच्छया पुनः ।
[9]वर्णस्तत्र प्रकर्तव्यो देशजातिवशानुगः[10] ॥१०८॥

व्यापकं लक्षणमाह कारणव्यपेदेशेनति । कारणं यथा क्लेशवहुला क्रिया कृष्णत्वे । आत्मेच्छयेति कविबुद्ध्यनुसारेणेत्यर्थः ।

---

1. KSS., NS. केतुमालास्तथा श्वेता ।
2. KSS., NS. नानावर्णाः स्मृता भूता वामना विकृताननाः । वराहमेष-महिषमृगवक्त्रास्तथैव च ।
3. KSS., NS. विद्याधराः सपितरो वानराश्च तथैव हि ।
4. KSS., NS. स्यु श्यामो गौराः ।
5. KSS. ते ।
6. KSS. does not read कुकर्मिणो ...... बुधैः ।
7. NS. यज्ञकर्मिणि ।
8. NS. नित्यमेतावता ।
9. KSS. त्वन्यः प्रयोक्तव्यो NS. त्वन्योऽपि कर्तव्यो ।
10. NS. तपोऽनुगः (?)

देशं[1] कर्म च जातिं च पृथिव्युद्देशसंश्रयम्[2] ।
विज्ञाय वर्तना कार्या पुरुषाणां प्रयोगतः[3] ॥१०९॥
किरातबर्बरान्ध्राश्च [4]द्रविडाः काशिकोसलाः ।
पुलिन्दा दाक्षिणात्याश्च प्रयेण त्वसिताः स्मृताः॥११०॥
शकाश्च यवनाश्चैव [5]पह्लवा बाह्लिकाश्च ये ।
प्रायेण गौराः कर्तव्या उत्तरा ये श्रिता दिशम् ॥१११॥
पाञ्चालाः [6]शौरसेनाश्च [7]माहिषाश्चौड्रमागधाः ।
[8]अङ्गा वङ्गाः कलिङ्गाश्च श्यामाः कार्यास्तु वर्णतः ॥११२॥
ब्राह्मणाः क्षत्रियाश्चैव [9]गौराः कार्यास्तथैव हि ।
वैश्याः शूद्रास्तथा चैव श्यामाः कार्यास्तु वर्णतः ॥११३॥
एवं कृत्वा यथान्यायं मुखाङ्गोपाङ्गवर्तनाम्[10] ।
श्मश्रुकर्म प्रयुञ्जीत देश[11]कालवयोऽनुगम् ॥११४॥
[12]शुद्ध विचित्रं श्यामं च तथा रोमशमेव च ।

---

तत्रेति भारते । शुद्धमिति क्षुरेण, सर्वथा चासितं, श्यामं पूर्वं क्षुरकर्म योजितमपीदानीं निवारितं तद्योजनाङ्कम् । विचित्रमिति क्षुरकर्त्रिकाकर्मणो-

---

1. KSS., NS. कालं ।
2. KSS., NS. एव च ।
3. KSS. वर्तनां कुर्यात्पुरुषाणां प्रयोगवित् ।
4. KSS. द्रमिला ।
5. KSS. पल्लवा बह्लिकादयः NS. पाह्लवा बाह्लिकाश्रयाः ।
6. KSS. सूरसेनाश्च ।
7. KSS., तथाचैव NS. महिषा ।
8. KSS. अङ्गवङ्गकलिङ्गास्तु ।
9. KSS. रक्ताः कार्या सदैव हि ।
10. KSS., NS. वर्णनम् ।
11. KSS., NS. कर्मक्रिया ।
12. KSS., NS. शुक्लं श्यामं विचित्रं ।

भवेच्चतुर्विधं श्मश्रु नानावस्थान्तरात्मकम्[1] ॥११५॥
शुद्धं[2] तु लिङ्गिनां कार्यं तथामात्यपुरोधसाम्[3] ।
मध्यस्था ये च पुरुषा ये च दीक्षां समाश्रिताः ॥११६॥
दिव्या ये पुरुषाः केचित्सिद्धविद्याधरादयः ।
[4]पार्थिवाश्च कुमाराश्च ये च राजोपजीविनः ॥११७॥
शृङ्गारिणश्च ये मर्त्या यौवनोन्मादिनश्च ये ।
तेषां विचित्रं कर्तव्यं श्मश्रु नाट्यप्रयोक्तृभिः ॥११८॥
अनिस्तीर्णप्रतिज्ञानां दुःखितानां तपस्विनाम् ।
व्यसनाभिहतानां च श्यामं श्मश्रु प्रयोजयेत् ॥११९॥
ऋषीणां तापसानां च ये च दीर्घव्रता नराः ।

---

त्पादनकर्मणा च रचितविचित्रसंनिवेशम् । रोमशमिति यथोत्पन्नम् । लिङ्गिनामपि ब्रह्मचारिवानप्रस्थ दीनाम् ।

"मध्यस्था ये च पुरुषा ये च दीक्षां समाश्रिताः"

इत्यर्धं—

"शुद्धं तु लिङ्गिनां कार्यं तथामात्यपुरोधसाम्"

इत्यर्धस्यानन्तरं योज्यम्, लेखकदोषात्तु स्थानान्तरे दृश्यते। मध्यस्थ इति नोत्तमानामधमानामित्यर्थः । यौवनोन्मादिन इति अमात्यपुरोधसोऽपीति भावः ।

---

1. KSS., NS. आश्रयम् ।
2. KSS. शुद्धस्तु लिङ्गिनः ।
3. नि. सा. संस्करणे "पुरोधसाम्" इत्यनन्तरं "अनिस्तीर्ण प्रतिज्ञानां" इति श्लोकः पठितः ।
4. KSS. नृपतीनां कुमाराणां ।

[1]तथा च चीरबद्धानां रोमशं श्मश्रु कीर्तितम् ।।१२०।।
एवं नानाप्रकारं तु श्मश्रु कार्यं प्रयोक्तृभिः[2] ।
अतः ऊर्ध्वं प्रवक्ष्यामि वेषन्नानाप्रयोगजान्[3] ।।१२१।।
शुद्धो विचित्रो मलिनस्त्रिविधो वेष उच्यते ।
तेषां[4] नियोगं वक्ष्यामि यथावदनुपूर्वशः ।।१२२।।
देवाभिगमने चैव [5]मङ्गले नियमस्थिते ।
तिथिनक्षत्रयोगे च विवाहकरणे तथा ।।१२३।।
धर्मप्रवृत्तं यत्कर्म स्त्रियो[6] वा पुरुषस्य वा ।
वेषस्तेषां[7] भवेच्छुद्धो ये च प्रायत्निका नराः ।।१२४।।
देवदानवयक्षाणां गन्धर्वोरगरक्षसाम् ।
नृपाणां कर्कशानां च चित्रो वेष उदाहृतः[8] ।।१२५।।
[9]वृद्धानां ब्रह्मणानां च श्रेष्ठ्यमात्यपुरोधसाम् ।
वणिजां काञ्चकीयानां तथा चैव तपस्विनाम् ।।१२६।।

---

शुद्ध इति शुक्लवस्त्रादिः प्रायः । प्रायत्निका इति प्रयत्ने भवा विनीता इत्यर्थः ।

---

1. KSS., NS. सिद्धविद्याधराणां च रोमशं तु विधीयते ।
2. KSS., NS. कर्म प्रयोजयेत् ।
3. काशीमुद्रितसंस्करणे—अतः परं माल्याच्छादनविधानश्लोकौ पठितौ ।
4. KSS., विभागं व्याख्यास्ये यथाकार्यं प्रयोक्तृभिः ।
5. KSS., NS. माङ्गल्ये ।
6. KSS.. NS. कार्यं स्त्रीणां ।
7. KSS., NS. तत्र ।
8. KSS., NS. वेषो भवेत्तदा ।
9. KSS., NS. न कञ्चुकिनाममात्यानां श्रेष्ठिनां सपुरोधसाम् । सिद्धविद्याधराणा च वणिक्छास्त्रविदामपि ।

विप्रक्षत्रियवैश्यानां स्थानीया ये च मानवाः ।
शुद्धो वस्त्रविधिस्तेषां कर्तव्यो नाटकाश्रयः ॥१२७॥
उन्मत्तानां प्रमत्तानामध्वगानां तथैव च[1] ।
[2]व्यसनोपहतानां च मलिनो वेष उच्यते[3] ॥१२८॥
शुद्धरक्तविचित्राणि वासांस्यूर्ध्वाम्बराणि[4] च ।
योजयेन्नाट्यतत्त्वज्ञो वेषयोः शुद्धचित्रयोः ॥१२९॥
कुर्याद्वेषे तु मलिने [5]मलिनं तु विचक्षणः ।
मुनिनिर्ग्रन्थशाक्येषु यतिपाशुपतेषु च[6] ॥१३०॥
[7]व्रतानुगस्तु कर्तव्यो वेषो लोकस्वभावतः ।
चीरवल्कलचर्माणि तापसानां तु योजयेत् ॥१३१॥
[8]परिव्राण्मुनिशाक्यानां वासः काषायमिष्यते ।
नानाचित्राणि वासांसि कुर्यात्पाशुपतेष्वथ ॥१३२॥
कुजातयश्च ये प्रोक्तास्तेषां चैव यथार्हतः ।
[9]अन्तःपुरप्रवेशे च विनियुक्ता हि ये नराः ॥१३३॥

---

चीरमिति अविनता स्थूला च वृक्षत्वक्, वल्कलं तु तद्विपरीतम्, यथा भूर्जपत्रत्वक्, मृगादेश्चर्म ।

---

1. KSS., NS. जनानामध्वगामिनाम् ।
2. KSS., NS. व्यसनोपगतानां ।
3. KSS., NS. इष्यते ।
4. NS. उच्चावचानि ।
5. KSS., NS. मलिनानि ।
6. KSS. त्रिदण्डिश्रोत्रियेषु च ।
7. KSS., NS. वृत्तानुगश्च ।
8. KSS. परिव्राण्मुनिमुख्येषु तापसेषु तथैव च । काषायवसनो वेषः कार्यस्त्वर्थवशेन वा । NS. does not read it.
9. KSS. अन्तःपुरस्य रक्षार्थे ।

काषायकञ्चुकपटाः कार्यास्तेऽपि[1] यथाविधि ।
[2]अवस्थान्तरतश्चैवं नृणां वेषो भवेदथ ॥१३४॥
वेषः सांग्रामिकश्चैव शूराणां संप्रकीर्तितः ।
विचित्रशस्त्रकवचो बद्धतूणो[3] धनुर्धरः ॥१३५॥
[4]चित्रो वेषस्तु कर्तव्यो नृपाणां नित्यमेव च[5] ।
केवलस्तु भवेच्छुद्धो नक्षत्रोत्पातमङ्गले ॥१३६॥
एवमेष भवेद्वेषो देशजातिवयोऽनुगः[6] ।
उत्तमाधममध्यानां स्त्रीणां नृणामथापि च ॥१३७॥
एवं वस्त्रविधिः कार्यः प्रयोगे नाटकाश्रये ।
नानावस्थां समासाद्य शुभाशुभ कृतस्तथा ॥१३८॥
तथा प्रतिशिरश्चापि कर्तव्यं नाटकाश्रयम् ।
[7]दिव्यानां मानुषाणां च देशजातिवयःश्रितम्[8] ॥ ३९॥
पार्श्वगता मस्तकिनस्तथा चैव किरीटिनः ।
[9]त्रिविधो मकुटो ज्ञेयो दिव्यपार्थिवसंश्रितः ॥१४०॥

---

(नक्षत्रेति) नक्षत्रोत्पातप्रशमनार्थं यन्मङ्गलं, एतच्च नैमित्तिकस्य श्राद्ध-

---

1. KSS. स्त्वेषां ।
2. KSS. अवस्थान्तरमासाद्य स्त्रीणां वेषो भवेदथ । NS. अवस्थान्तरितश्चैव सम्यग्वेषो भवेत्तथा ।
3. NS. तूण, KSS. त्राणो ।
4. KSS. विचित्रवेषः ।
5. NS. हि ।
6. KSS. वयोजातिगुणान्वितः NS. एवं वेषो बुधैः कार्यो देशजातिगुणान्वितः ।
7. KSS. देवानां ।
8. KSS. श्रितः ।
9. KSS. does not read here two verses.

देवगन्धर्वयक्षाणां पन्नगानां सरक्षसाम् ।
कर्तव्या नैकविहिता मुकुटाः पार्श्वमौलयः ॥१४१॥
उत्तमा ये च दिव्यानां ते च कार्याः किरीटिनः ।
मध्यमा मौलिनश्चैव कनिष्ठाः [1]शीर्षमौलिनः ॥१४२॥
नराधिपानां कर्तव्या मस्तके मकुटा[2] बुधैः ।
विद्याधराणां सिद्धानां चारणानां तथैव च ॥१४३॥
[3]ग्रन्थिमत्केशमकुटाः कर्तव्यास्तु प्रयोक्तृभिः ।
रक्षोदानवदैत्यानां पिङ्गकेशेक्षणानि हि[4] ॥१४४॥
हरिच्छमश्रूणि च तथा [5]मकुटास्यानि कारयेत् ।
[6]उत्तमाश्चापि ये तत्र ते कार्याः पार्श्वमौलिनः ॥१४५॥
[7]कस्मात्तु मुकुटाः सृष्टाः प्रयोगे दिव्यपार्थिवे ।
केशानां छेदनं दृष्टं वेदवादे[8] यथाश्रुति ॥१४६॥
भद्रीकृतस्य वा यज्ञे शिरसश्छादनेच्छया[9] ।
केशानामप्यदीर्घत्वात्स्मृतं मुकुटधारणम्[10] ॥१४७॥

---

देवार्चनादेरप्युपलक्षण् । प्रकृतिरूपं शिरः प्रतिशिरः

---

1. KSS. पार्श्वं ।
2. KSS. तथा मस्तकिनो NS. मुकुटं ।
3. NS. ग्रन्थिताः केशमकुटं ।
4. KSS.. NS. पिककेशकृतानि तु ।
5. KSS., NS. मुखशीर्षाणि ।
6. KSS., NS. उदात्ताः ।
7. KSS., NS. तस्मात्तु ।
8. KSS., NS. नेष्टं वेदवेदे ।
9. KSS., NS. छेदनेप्सया ।
10. KSS., NS. धारिणः ।

सेनापतेः पुनश्चापि युवराजस्य चैव हि ।
[1]योजयेदर्धमकुटं महामात्राश्च ये नराः ॥१४८॥

अमात्यानां कञ्चुकिनां तथा श्रेष्ठिपुरोधसाम् ।
[2]वेष्टनाबद्धपट्टानि प्रतिशीर्षाणि कारयेत् ॥१४९॥

पिशाचोन्मत्तभूतानां साधकानां तपस्विनाम् ।
अनिस्तीर्णप्रतिज्ञानां लम्बकेशं भवेच्छिरः[3] ॥१५०॥

शाक्यश्रोत्रियनिर्ग्रन्थपरिव्राड्दीक्षितेषु च ।
शिरोमुण्डं तु कर्तव्यं यज्ञदीक्षान्वितेषु च ॥१५१॥

तथा [4]व्रतानुगं चैव शेषाणां लिङ्गिनां शिरः ।
मुण्डं वा कुञ्चितं वापि लम्बकेशमथापि वा ॥१५२॥

[5]धूर्तानां चैव कर्तव्यं ये च रात्र्युपजीविनः ।
[6]शृङ्गारचित्ताः पुरुषास्तेषां कुञ्चितमूर्धजाः ॥१५३॥

बालानामपि कर्तव्यं [7]त्रिशिखण्डविभूषितम् ।
जटामकुटबद्धं[8] च मुनीनां तु भवेच्छिरः ॥१५४॥

चेटानामपि कर्तव्यं त्रिशिखं मुण्डमेव वा ।

---

(वेष्टनेति) वेष्टनार्थमाबद्धं पट्टमुष्णीषप्रायं येषु । त्रिखण्डाश्चूलिकाः (त्रिशिखण्डम्) ।

---

1. KSS., NS. मस्तकेष्वर्धमकुटं प्रयोगे संप्रयोजयेत् ।
2. KSS., NS. वेष्टनं बन्धपट्टादि ।
3. KSS., NS. केशं तु शीर्षकम् ।
4. KSS., NS. वृत्तानुषङ्गेण ।
5. KSS., NS. वधूनां चापि ।
6. KSS., NS. ये च शृङ्गारिणस्तेषां शिरः कुञ्चितमूर्धजम् ।
7. KSS., NS. न शिखण्डविभूषितम् ।
8. KSS., NS. लम्बं ।

[1]विदूषकस्य खलतिः स्यात्काकपदमेव वा ।।१५५।।
शेषाणामर्थयोगेन देशजातिसमाश्रयम्[2] ।
शिरः प्रयोक्तृभिः कार्यं नानावस्थान्तराश्रयम्[3] ।।१५६।।
[4]भूषणैर्वर्णकैर्वस्त्रैर्माल्यैश्चैव यथाविधि ।
एवं नानाप्रकारैस्तु बुद्ध्या वेषान्प्रकल्पयेत् ।।१५७।।
पूर्वं तु प्रकृतिं स्थाप्य प्रयोगगुणसंभवाम् ।
स्त्रीणां वा पुरुषाणां वाप्यवस्थां[5] प्राप्य तादृशीम् ।।१५८।।
सर्वे भावाश्च दिव्यानां कार्या मानुषसंश्रयाः ।
तेषां चानिमिषत्वादि नैव कार्यं प्रयोक्तृभिः ।।१५९।।
इह भावरसाश्चैव दृष्टिभिः संप्रतिष्ठिताः ।
दृष्ट्यैव स्थापितो ह्यर्थः पश्चादङ्गैर्विभाव्यते ।।१६०।।
एवं ज्ञेयाऽङ्गरचना नानाप्रकृतिसंभवा ।
[6]सजीव इति यः प्रोक्तस्तस्य वक्ष्यामि लक्षणम् ।।१६१।।
यः प्राणिनां प्रवेशो वै [7]सजीव इति संज्ञितः ।
चतुष्पदोऽथ द्विपदस्तथा चैवापदः स्मृतः ।।१६२।।

(काकपदमिति) काकपक्षवद्यत्र केशविच्छेदः ।

---

1. KSS., NS. विदूषकास्य कर्तव्यं खल्लि काकपदं तथा ।
2. KSS., NS. वयःश्रितम् ।
3. KSS., NS. प्रयोगस्य वशानुगम् ।
4. KSS., NS. अतस्तैर्भूषणैश्चित्रैर्वस्त्रैर्माल्यैरथापि च । अवस्थाप्यकृतिः स्थाप्या प्रयोगरससंभवा ।।
5. KSS., NS. व्यवस्थां ।
6. KSS, NS. संजीवः ।
7. KSS., NS. स संजीव इति स्मृतः ।

[1]उरगानपदान् विद्याद् द्विपदान्खगमानुषान् ।
[2]ग्राम्या आरण्याः पशवो विज्ञेयाः स्युश्चतुष्पदाः ॥१६३॥
[3]ये ते तु युद्धसंफेटैरुपरोधैस्तथैव च ।
नानाप्रहरणोपेताः प्रयोज्या नाटके बुधैः ॥१६४॥
आयुधानि च कार्याणि पुरुषाणां प्रमाणतः ।
तान्यहं [4]वर्तयिष्यामि यथापुस्तप्रमाणतः[5] ॥१६५॥
भिण्डिर्द्वादशतालः स्याद्दश कुन्तो भवेदथ ।
अष्टौ शतघ्नी शूलं[6] च तोमरः शक्तिरेव वा ॥१६६॥
[7]अष्टौ ताला धनुर्ज्ञेय मायामोऽस्य द्विहस्तकः ।
शरो गदा च [8]वज्रा च चतुस्तालं विधीयते ॥१६७॥
अङ्गुलानि त्वसिः कार्यश्चत्वारिंशत्प्रमाणतः ।
द्वादशाङ्गुलकं चक्रं ततोऽर्धं प्रास इष्यते ॥१६८॥

---

प्रहरणोपेता इति युद्धोपयोगिन इत्यर्थः । तथा च नागास्त्रे दत्ते सर्पाकृतिः प्रदर्शनाया, एवं नृसिंहास्त्रे तदाकृतिरित्यादि । (आयुधानां प्रमाणं) दर्शयति (भिण्डिरिति । वज्रं······चतुस्तालम्) । चक्रमिति खड्गादियुद्धेऽपवारणम् ।

---

1. KSS., NS. उरगाह्यपदा ज्ञेया द्विपदाः खगमानुषाः ।
2. KSS., NS. ग्राम्यारण्याश्च ।
3. KSS. एते तु युद्धसम्भेदो त्ववरोधे तथैव च । NS, एतेऽपि ।
4. KSS., NS. सम्प्रवक्ष्यामि ।
5. KSS. यथायुक्तिप्रमाणतः । NS. यथावदनुपूर्वशः ।
6. KSS., NS. शूलश्च ।
7. KSS., NS. अष्टतालं धनुर्ज्ञेयमायामोस्तु द्विहस्ततः ।
8. NS. चक्रं, KSS. वज्रं ।

प्रासवत्पट्टसं [1]विद्या द्रुण्डश्चैव तु विंशतिः ।
विंशतिः [2]कणयश्चैव ह्यङ्गुलानि प्रमाणतः ॥१६९॥
[3]षोडशाङ्गुलविस्तीर्णं [4]सबलं संप्रघण्टिकम् ।
त्रिंशदङ्गुलमानेन कर्तव्यं खेटकं बुधैः ॥१७०॥
जर्जरो दण्डकाष्ठं च तथैव प्रतिशीर्षकम् ।
छत्रं च चामरं चैव ध्वजो भृङ्गार[5] एव च ॥१७१॥
यत्किञ्चिन्मानुषे लोके द्रव्यं पुंसां प्रयोजकम्[6] ।
[7]यच्चोपकरणं सर्वं नाट्ये तत्संप्रकीर्तितम् ॥१७२॥
यद्यस्य विषयप्राप्तं तेनोह्यं तस्य लक्षणम् ।
जर्जरे दण्डकाष्ठे च संप्रवक्ष्यामि लक्षणम् ॥१७३॥
[8]माहेन्द्रा वै ध्वजाः प्रोक्ता लक्षणैर्विश्वकर्मणा ।
एषामन्यतमं कुर्याज्जर्जरं दारुकर्मतः ॥१७४॥

---

यद्यस्येति । यस्य शास्त्रस्य यद्विषयीभूतं पुरुषस्य वा तदनुसारेण तस्य-वस्तुनो लक्षणमूह्यमिति । ऊह्यशब्दे भेदमाह, परिपूर्णलक्षणमुपजीव्यम्;

---

1. KSS., NS. पट्टिशं ।
2. KSS., NS. कम्पनं ।
3. KSS. reads an additional line—षोडशाङ्गुलिविस्तीर्णं चर्मकार्यं द्विहस्तकम् ।
4. KSS. सवाल्यं सप्रघण्टुकम् NS. सबलं संप्रकीर्तितम् ।
5. KSS., NS. भृंगार ।
6. KSS., NS. प्रयोगजम् ।
7. KSS., NS. तत्सर्वं तूपकरणं नाट्येऽस्मिन्संविधीयते ।
8. KSS. माहेन्द्रे वै ध्वजे कार्यं लक्षणं विश्वकर्मणा ।

अथवा [1]वृक्षयोनिः स्यात्प्ररोहो वापि जर्जरः ।
वेणुरेव भवेच्छ्रेष्ठस्तस्य वक्ष्यामि लक्षणम् ॥१७५॥
श्वेतभूम्यां तु यो जातः पुष्यनक्षत्रजस्तथा ।
[2]संग्राह्यो वै भवेद्वेणुर्जर्जरार्थे प्रयत्नतः ॥१७६॥
प्रमाणमङ्गुलानां तु शतमष्टोत्तरं भवेत् ।
पञ्चपर्वा चतुर्ग्रन्थिस्तालमात्रस्तथैव च ॥१७७॥
स्थूलग्रन्थिर्न कर्तव्यो न शाखी न च कीटवान् ।
न कृमिक्षतपर्वा च न हीनश्चान्यवेणुभिः ॥१७८॥
मधुसर्पिस्सर्षपाक्तं माल्यधूपपुरस्कृतम् ।
उपास्य विधिवद्वेणुं गृह्णीयाज्जर्जरं प्रति ॥१७९॥
यो विधिर्यः क्रमश्चैव माहेन्द्रे तु ध्वजे स्मृतः ।
स जर्जरस्य कर्तव्यः पुष्यवेणुसमाश्रयः ॥१८०॥
भवेद्यो दीर्घपर्वा तु [3]तनुपत्रस्तथैव च ।
[4]पर्वाग्र तण्डुलश्चैव पुष्यवेणुः [5]स कीर्तितः ॥१८१॥

(यथा) खड्गलक्षणेऽप्युपजीव्यमाने लोहादिनिर्मितत्वमप्यूह्यते । तच्च तस्मा-न्नाट्योपयोगरूपमूहापोहाभ्यां कर्तव्यमिति । लक्षणानीति (लक्षणैरिति ?) विश्वकर्ममते बहुभेदं महेन्द्रध्वजस्य लक्षणमुक्तमित्यर्थः । न हीनश्चेति अन्यवेणुसंघर्षेऽपूर्णोऽवयवतः स नेष्यत इत्यर्थः ।

---

1. KSS. NS. वृक्षजातस्य ।
2. KSS. does not read this verse.
3. KSS. तनुपर्वा ।
4. KSS. पर्वानुमण्डलं ।
5. KSS. प्रकीर्तितः ।

विधिरेष[1] मया प्रोक्तो जर्जरस्य प्रमाणतः[2]।
अत ऊर्ध्वं प्रवक्ष्यामि [3]दण्डकाष्ठस्य लक्षणम् ॥१८२॥
कपित्थबिल्ववंशेभ्यो दण्डकाष्ठं भवेदथ।
[4]वक्रं चैवहि कर्तव्यं त्रिभागे लक्षणान्वितम् ॥१८३॥
कीटैर्नोपहतं यच्च व्याधिना न च पीडितम्।
मन्दशाखं भवेद्यच्च दण्डकाष्ठं तु तद्भवेत्[5] ॥१८४॥
यस्त्वेभिर्लक्षणैर्हीनं दण्डकाष्ठं सजर्जरम्।
कारयेत्स त्वपचयं महान्तं प्राप्नुयाद्ध्रुवम् ॥१८५॥
[6]अथ शीर्षविभागार्थं घटी कार्या प्रयत्नतः।
[7]स्वप्रमाणविनिर्दिष्टा द्वात्रिंशत्यङ्गुलानि वै ॥१८६॥
बिल्वमध्येन[8] कर्तव्या [9]घटी सिरसमाश्रया।

---

पुष्यवेणुं व्याचष्टे भवेद्वेणुर्दीर्घपर्वेति लक्षणेन लेखा शीर्षविभागा इति यत्र द्विशिरास्त्रिशिरा इत्यादि दृश्यते, यत्र वा।

---

1. NS. एवं।
2. KSS., NS. तु लक्षणे।
3. KSS. दण्डकाष्ठं भवेत्सदा NS. दण्डकाष्ठं भवेदथ।
4. KSS. चक्रं चैव हि तत्कार्यं। NS. त्वैव हि तत्कार्यम्।
5. NS. तदुच्यते।
6. KSS. NS. तथा शीर्षविधानार्थं पटी कार्या तु मानतः।
7. KSS., NS. सप्रमाण।
8. KSS., NS. कल्केन।
9. KSS., NS. पटी चीरसमाश्रया।

स्विन्नेन बिल्वकल्केन द्रवेण च समन्विता[1] ॥१८७॥
भस्मना वा तुषैर्वापि कारयेत्प्रतिशीर्षकम्[2] ।
संछाद्य [3]तु ततो वस्त्रैर्बिल्वदिग्धैर्घटाश्रयैः[4] ॥१८८॥
बिल्वकल्केन चीरं तु[5] दिग्ध्वा संयोजयेद्घटीम् ।
न स्थूलां [6]नानतां तन्वीं दीर्घां चैव न कारयेत् ॥१८९॥
[7]तस्यामातपशुष्कायां सुशुष्कायामथापि वा ।
छेद्यं बुधाः[8] प्रकुर्वन्ति विधिदृष्टेन कर्मणा ॥१९०॥
सुतीक्ष्णेन तु शस्त्रेण अर्धार्धं प्रविभज्य च ।
स्वप्रमाणविनिर्दिष्टं[9] ललाटकृतकोणकम् ॥१९१॥
[10]अर्धाङ्गुलं ललाटं तु कार्यं छेद्यं षडङ्गुलम् ।

---

निजशिर एवाच्छाद्य शिरोऽन्तरं प्रदर्श्यते । प्रतिपादप्रतिहस्तादेष एव कल्पः । बिल्वस्य मध्यमज्जा सिरश्च वृक्षत्वगादिः । कथं सा कर्तव्येत्याह स्विन्नेनेति भस्मना तुषचूर्णेन वा सुसमाहिता छादितच्छिद्रेत्यर्थः । न स्थूलामिति गुरुत्वभयात् । नानतामिति पेलवात्, छेद्यमित्यवयवच्छिद्रोत्पादनार्थम् ।

---

1. KSS., NS. समागता ।
2. KSS. NS. प्रतिशीर्षाणि कारयेत् ।
3. KSS., NS. कृतको ।
4. KSS. घनाश्रयैः NS. वनाश्रयैः ।
5. KSS., NS. दिग्धाङ्गं योजयेत् पटीम् ।
6. NS., KSS. न तनुं चैव न मृद्वी ।
7. KSS., NS. शुष्कायां ततस्तस्यामनिलातपयोगतः ।
8. KSS, NS. छेद्यं बुधासु कुर्वीत ।
9. KSS., NS. ललाटाकृति कोणजम् ।
10. KSS., NS. अर्धाङ्गुललाष्टं तु छेद्यं ।

अर्धाधंमङ्गुलं छेद्यं कटयोर्द्व्यङ्गुलं[1] भवेत् ॥१९२॥
कटान्ते कर्णनालस्य छेद्यं [2]द्व्यधिकमङ्गुलम् ।
त्र्यङ्गुलं कर्णविवरं तथा स्याच्छेद्य मेव हि ॥१९३॥
[3]ततश्चैवावटुः कार्या [4]सुसमा द्वादशाङ्गुला ।
घट्यां ह्येतत्सदाच्छेद्ये विधानं विहितं मया ॥१९४॥
[6]तस्योपरिगताः कार्या मुकुटा बहुशिल्पजाः ।
नानारत्नप्रतिच्छन्ना बहुरूपोपशोभिताः ॥१९५॥
तथोपकरणानीह नाट्ययोगकृतानि वै[7] ।
बहुप्रकारयुक्तानि कुर्वीत प्रकृतिं प्रति ॥१९६॥
यत्किचिदस्मिन् लोके तु[8] चराचरसमन्विते ।
विहितं कर्म शिल्पं वा तत्तूपकरणं स्मृतम् ॥१९७॥
यद्यस्य विषयं[9] प्राप्तं तत्तदेवाभिगच्छति ।
[10]नास्त्यन्तः पुरुषाणां हि नाट्योपकरणाश्रये ॥१९८॥

---

अवटुरिति कर्णशष्कुली ।

---

1. KSS., NS. त्र्यङ्गुलं ।
2. KSS., NS. स्वधिकं ।
3. KSS., NS. ततश्च वावटुः ।
4. KSS. ससमा ।
5. KSS., NS. पटीच्छेद्यकृतं ह्येतत् ।
6. KSS., NS. तस्योपरि ततः कार्या मुकुटा विविधाश्रयाः ।
7. KSS. युक्तिकृतानि च ।
8. KSS. सचराचरसंज्ञिते ।
9. KSS., NS. विषयं प्राप्यं स तस्मिंस्त्वधिगच्छति ।
10. KSS. नान्यतः...करणाश्रयम् ।

[1]यद्येनोत्पादितं कर्म शिल्पयोग[2] क्रियापि वा ।
[3]तस्य तेन कृता सृष्टिः प्रमाणं लक्षणं तथा ॥१९९॥
या[4] काष्ठयन्त्रभूयिष्ठा कृता सृष्टिर्महात्मना ।
[5]न सास्माकं नाट्ययोगे कस्मात्खेदावहा हि सा ॥२००॥
यद्द्रव्यं जीवलोके तु नानालक्षणलक्षितम् ।
तस्यानुकृतिसंस्थानं नाट्योपकरणं भवेत् ॥२०१॥
प्रासाद गृहयानानि [6]नानाप्रहरणानि च ।
[7]न शक्यं तानि वै कर्तुं यथोक्तानीह लक्षणैः ॥२०२॥
लोकधर्मी भवेत्त्वन्या नाट्यधर्मी तथापरा ।
स्वभावो लोकधर्मी तु विभागो नाट्यमेव हि ॥२०३॥
आयसं तु न कर्तव्यं न च सारमयं तथा ।
नाट्योपकरणं तज्ज्ञैर्गुरुखेदकरं भवेत्[8] ॥२०४॥
काष्ठचर्मसु वस्त्रेषु जतुवेणुदलेषु च ।
नाट्योपकरणानीह लघुकर्माणि कारयेत् ॥२०५॥

---

महात्मनेति विश्वकर्मणा । विभाव इति भावनामात्रमित्यर्थः ।

---

1. NS. नाट्येनोत्पादितं ।
2. NS. योगः ।
3. NS. तेन तस्य ।
4. KSS., NS. कार्णायसभूयिष्ठा कृता भूमिर्महत्तरा ।
5. KSS., NS. नास्माकं सम्मता नाट्ये गुरुत्वात् खेददा हि सा ।
6. KSS., NS. नाट्योपकरणानि च ।
7. KSS., NS. शक्यानि तथा ।
8. गुरुत्वात् खेदकृद्धि तत् KSS., NS. जतुकाष्ठचर्मवस्त्रप्रभावेणुदलैस्तथा ।

[1]चर्मवर्मध्वजाः शैलाः प्रासादा देवतागृहाः ।
हयवारणयानानि विमानानि गृहाणि च ॥२०६॥
पूर्वं वेणुदलैः कृत्वा कृतीर्भावसमाश्रयाः ।
ततः सुरङ्गैराच्छाद्य वस्त्रैः सारूप्यमानयेत् ॥२०७॥
अथवा यदि वस्त्राणामसान्निध्यं भवेदिह[2] ।
[3]तालीयैर्वा किलिञ्जैर्वा श्लक्ष्णै [4]र्वस्त्रक्रिया भवेत् ॥२०८॥
तथा प्रहरणानि स्युस्तृणवेणुदलादिभिः ।
जतुभाण्डक्रियाभिश्च नानारूपाणि नाटके[5] ॥२०९॥
[6]प्रतिपादं प्रतिशिरः [7]प्रतिहस्तं प्रतित्वचम् ।
[8]तृणैः किलिञ्जैर्भाण्डेर्वा [9]सारूप्याणि तु कारयेत् ॥२१०॥
यद्यस्य [10]सदृशं रूपं सारूप्यगुणसंभवम् ।

---

लघुकर्माणीति येषु क्रियमाणेषु लाघवेन क्रिया संपद्यते ।
तालीयैरिति तालपत्रैः । भाण्डैरिति अलाबुदलखङ्गादिभिः ।

---

1. ↑ S. वर्मचर्म । KSS. does not read two verses here.
2. KSS. तद्विधानमसंभवम् ।
3. KSS. तालीयजैः कीलजैर्वा ।
4. KSS. वस्त्रैः ।
5. KSS. कारयेत् ।
6. KSS., NS. प्रतिपादौ ।
7. KSS., NS. प्रतिहस्तौ ।
8. KSS., NS. तृणजैः कीलजैः ।
9. KSS., NS. सरूपाणीह ।
10. KSS., NS. यादृशं ।

मृण्मयं [1]तत्तु कृत्स्नं तु नानारूपं[2]तु कारयेत् ॥२११॥

भाण्डवस्त्रमधूच्छिष्टैर्लाक्षयाभ्रदलेन च ।

[3]नागास्ते विविधाः कार्या ह्यतसीशणबिल्वजैः ॥२१२॥

नानाकुसुमजातीश्च फलानि विविधानि च ।

भाण्डवस्त्रमधूच्छिष्टैर्लाक्षया वापि कारयेत् ॥२१३॥

भाण्डवस्त्रमधूच्छिष्टैस्ताम्रपत्रै[4]स्तथैव च ।

[5]सम्यक्च नीलीरागेणाप्यभ्रपत्रेण चैव हि ॥२१४॥

रञ्जितेनाभ्रपत्रेण [6]मणीश्चैव प्रकारयेत् ।

उपाश्रयमथाप्येषां शुल्बवङ्गे न[7] कारयेत् ॥२१५॥

विविधा मकुटा दिव्या पूर्वं ये गदिता मया ।

तेऽभ्रपत्रोज्ज्वलाः कार्या [8]मणिक्यालोकशोभिताः ॥२१६॥

न शास्त्रप्रभवं कर्म तेषां हि समुदाहृतम् ।

---

मधूच्छिष्टं सिक्थकम् ।

---

1. KSS., NS. तत्र ।
2. KSS., NS. नानारूपान् ।
3. इतोऽग्रे सार्धैकपद्यं NS. पुस्तके नास्ति । KSS. reads.
   नगास्तु विविधा कार्याश्चिर्मवर्मध्वजास्तथा ।
   नानाकुसुमजातानि फलानि कुसुमानि च ।
   विविधानि च भाण्डानि लाक्षया वेहकारयेत् ॥
4. KSS. वर्णैः ।
5. KSS., NS. तत्साम्यं ।
6. KSS. मर्षाः ।
7. KSS. शुल्वभ्रष्टैनं । NS. तुल्यं व(२)ङ्गेन ।
8. GOS. मणिव्यालोपशोभिताः ।

[1]आचार्यबुध्द्या कर्तव्यमूहापोहप्रयोजितम् ॥२१७॥
[2]एष मर्त्यक्रिया योगो [3]भविष्यत्कल्पितो मया ।
[4]कस्मादल्पबलत्वं हि [5]मनुष्येषु भविष्यति ॥२१८॥
[6]मर्त्यानामपि नो शक्या विभावाः सर्वकाञ्चनाः ।
नेष्टाः सुवर्णरत्नैस्तु मुकुटा भूषणानि वा ॥२१९॥
युद्धे नियुद्धे नृत्ते वा वृष्टिव्यापारकर्मणि ।
गुरुभारा[7]वसन्नस्य स्वेदो मूर्छाऽपि[8] जायते ॥२२०॥
[9]स्वेदमूर्छाक्लमार्तस्य प्रयोगस्तु विनश्यति ।
प्राणात्ययः कदाचिच्च भवेद्व्यायतचेष्टया ॥२२१॥
तस्मात्ताम्रमयैः पत्रैरभ्रकै रञ्जितैरपि ।
[10]भेण्डैरपि मधूच्छिष्टैः कार्याण्याभरणानि तु ॥२२२॥
एवं लोकोपचारेण स्वबुद्धिविभवेन च ।
नाट्योपकरणानीह बुधः सम्यक् प्रयोजयेत् ॥२२३॥

---

1. KSS., NS. विचार्य ।
2. KSS., NS. एवं ।
3. KSS., NS. भविष्यन् कथितो ।
4. KSS., NS. यस्मात् ।
5. KSS., NS. मानुषेषु ।
6. KSS., NS. मर्त्यानामपशक्तीनां न भवेद्राङ्गचेष्टितम् ।
7. GOS. भाव ।
8. GOS. च ।
9. KSS. स्वेदमूर्च्छाश्रमात्तस्य । NS. श्रमार्तस्य ।
10. KSS., NS भाण्डैरथ ।

[1]न भेद्यं नैव चच्छेद्यं[2] न प्रहर्तव्यमेव च ।
[3]रङ्गे प्रहरणैः कार्यं संज्ञामात्रं तु कारयेत् ॥२२४॥
[4]अथवा योगशिक्षाभिर्विद्यामायाकृतेन वा ।
शस्त्रमोक्षः[5] प्रकर्तव्यो रङ्गमध्ये प्रयोक्तृभिः ॥२२५॥
एवं नानाप्रकारैस्तु आयुधाभरणानि च ।
नोक्तानि यानि च मया लोकाद् ग्राह्याणि तान्यपि ॥२२६॥
आहार्याभिनयो ह्येष मया प्रोक्तः समासतः ।
अतः ऊर्ध्वं प्रवक्ष्यामि सामान्याभिनयं प्रति ॥२२७॥

इति भरतीये नाट्यशास्त्रे आहार्याभिनयो
नामैकविंशोऽध्यायः ।

— ० —

---

सुधामकोक्ता विद्या हस्तलाघवादि माया चक्षुर्बन्धादिका । एतमध्याय-मुपसंहर (न्नभिनये वक्तव्यशेषमा)सूत्रयति आहार्याभिनयो ह्येष इति शिवम् ।

आहार्याभिनयाध्याये वृत्तिरेषा यथाक्रमम् ।
कृताभिनवगुप्तेन ग्रन्थिस्थानेषु तत्त्वतः ॥

इति श्रीमहामाहेश्वराभिनवगुप्ताचार्यविरचितायां
नाट्यवेदविवृतावभिनवभारत्यामाहार्या-
भिनयाध्याय एकविंशः ॥

— ० —

---

1. KSS. भोक्तव्यं नायुधं रङ्गे न छेद्यं न च ताडनम् । प्रादेशमात्रं गृह्णीयात्संज्ञार्थं शस्त्रमेव च ।
2. NS. स्थेयं ।
3. NS. रङ्गप्रहरणैः ।
4. KSS. शिक्षायोगेन नाट्येऽस्मिन् शिक्षामायाकृतेन वा ।
5. KSS. तु कर्त्तव्यो ।

श्रीः

# नाट्यशास्त्रम्

## द्वाविंशोऽध्यायः[1]

— o —

सामान्याभिनयो नाम ज्ञेयो वागङ्गसत्त्वजः ।

---

### अभिनवभारती द्वाविंशोऽध्यायः

भेदेनात्माभिमुखतां नयन्तं भेदकारणम् ।
सामान्याभिनयाकारगर्वंमूर्ति शिवं नुमः ॥

इहान्यदित्युपरञ्जकं च अभिनयं चान्याभिनयं समं च तदिति तत्र भवः सामान्याभिनय इति परमार्थः । कोहलमतानुसारिभिर्वृद्धैः सामान्याभिनयस्तु षोढा भण्यते । तथा हि कोहलः—

शिष्टं कामं मिश्रं वक्रं संभूतमेकयुक्तत्वम् ।
सामान्याभिनये यत् षोढा विदुरेतदेव बुधाः ॥ इति ।

तत्र सामान्यमिति साधारणमुच्यते तेन सर्वेष्वभिनयेषु यद्रूपमवशिष्टं पूर्वं नोक्तमवश्यं वक्तव्यं च कविनटशिक्षार्थं तद्येनाध्यायेनाभिधीयते स सामान्याभिनयः, सोऽभिनयेषु सामान्यभूतः साधारणभूतोऽभिनयविषयत्वात् स्ववाच्याभिमुख्यनयनाद्वाभिनय इति व्युत्पत्त्या। तथा हि सात्त्विकस्य हावभावहेलादिना विशेषः पूर्वमनुक्तोऽभिधीयते । विषयश्चैवं 'षडात्मकः शारीरः' (२२-४१) इत्यादिना 'आलापश्च प्रलापश्च' (२२-४६) इत्यादिनाङ्गिकवाचिकयोः ।

ननु 'अङ्गाद्यभिनयस्यैव यो विशेषः' (२५-१) इत्यतः चित्राभिनयात् कोऽस्य विशेषः, उच्यते—तत्र वागङ्गसत्त्वव्यामिश्रत्वेन चित्रता । इह तु

---

1. KSS, चतुर्विंशः ।

प्रत्येकनियतस्यानुक्तस्य विशेषान्तरस्याभिधानमिति। तथा हि तत्र चित्र-शब्दं पठिष्यति 'अनुक्त उच्यते चित्र' इति (२५-२) तथा (चेह तु) सामान्याभिनयः कामोपचारः, स हि सकलप्राणिवर्गसाधारण आभिमुख्यं नयति च सर्वं जन्तुवर्गमिति वागङ्गसत्त्वलक्षणेन सकलेन सामान्यात्मना चाभि-नयेन अभिनीयत इति। तत्कामोपचारः स्त्रीपुरुषस्वभावः तदवस्थाभेदेनेहाभि-नीयत इति सामान्यभिनयोऽयमध्यायः। अत एवैतदध्यायशेषभूतकामोप-चारप्रतिपादकमेवाध्यायं वैशिकोपचाराख्यं मन्तव्यम्। तथा सामान्यमिति समानानां कर्म सामान्यं च तदभिनयनं च। तत्तेनैकमेवाभिनयं गमयितुं यथासम्भवं बहूनामभिनयानां याभिनयक्रिया एकं तदेवाभिनयक्रियारूपं कर्म समानानां सताम्।

नन्वेवमेकत्राभिनये किं बहुभिरभिनयैः। तत्र केचिदाहुः—स्वोपस्थानेषु साध्येषूपस्कारांशो व्यापार इति। तच्चासत्, नहि नाटकादौ सूत्रेष्विवोप-स्कारो युक्तः। स ह्यत्र प्रत्युत दोषाय, यथाह—"काव्यान्यपि यदीमानि व्याख्यागम्यानि शास्त्रवत्"* इत्यादिना। प्रविस्पष्टपराकरणं तत्र निमित्तं स्पष्टार्थेन वाक्यमात्रेण तत्सिद्धेः।

तत्रोक्तं श्रीशङ्कुकादिभिः—इह लोकानुसारिनाट्यात् लोके सुखदुःखाद्या-वेशविवशो वक्ता, तत एव स्तम्भस्वेदादिभिर्बृंहितं अवधानबन्धोऽपि गुण-क्रियादिस्वरूपसाहचर्याभ्याससंस्कृतः (तं?) शब्दप्रयोगः (गं?) तदुपचिताङ्गो-पाङ्गविकारसंकीर्णमेव कुर्वाणो दृश्यते—इति।

(१) यत्र त्वसत्यतो वक्तव्य तदस्य निरुक्तमष्टमेऽध्याये—

विभावयति यस्माद्धि नानार्थार्थप्रयोगतः।

शाखाङ्गोपाङ्गसंयुक्तं तस्मादभिनयः स्मृतः॥

इत्येवमन्तं श्लोकं व्याचक्षाणैः। [न तथा] सामान्यस्य समानीकृतः सकलाङ्गोपाङ्गकर्मणा सतोऽभिनयनं येनालातचक्रप्रतिमता प्रयोगस्य जायते। यथोक्तं 'प्रयोगश्चास्य कीदृश' इति, यद्वक्ष्यते।

---

* भामहालङ्कारे, भट्टिकाव्ये च।

'शिरोहस्तकटीवक्षोजङ्घोरुकरणेषु तु ।
समः कर्मविभागो यः सामान्याभिनयस्तु सः ॥ (अ २२) इति

(२) सामान्य इत्यनेनाशेषाभिनयविशेषा आङ्गिकादिगता उपलक्षिताः तत्कृतोऽभिनयः । यद्वक्ष्यति—

कृत्वा साचीकृतां दृष्टिं शिरः पार्श्वे नतं तथा ।
तर्जनीं कर्णदेशे च बुधः शब्दं विनिर्दिशेत् ॥ इति (२२-७६)

(३) अत्र हि दृष्टिविशेषः शिरोविशेषो हस्तविशेषश्च संभूयैकमभिनयं प्रत्येकोऽभिनयः संपद्यते । (४) एकैकेन तु शब्दाभिनयस्य कापि मात्रा निष्पद्यते, एवमेव तृतीयपक्षादस्य विशेषः । तत्र हि एकैकस्याप्यभिनयनेऽस्य (संभूतत्वेन) सामर्थ्यम् । (५) तथा विघ्नसंभावना*विहीनसकलसाधारणस्पष्टभावसाक्षात्कारकल्पाध्यवसायसंपत्तये सर्वेषां प्रयोग इत्युक्तम् । (६) तथाभिनय इति तद्विशेषो यत्न उच्यते, स च साधारणरूपः सामान्याभिनयः । तथा हि—प्रकटाक्षप्रेक्षणाद्यं यं यत्नं कुशलं प्रयोक्ता गृह्णाति तेनैव तदुचितशिरःकर्मान्तमस्य संपाद्यम् इति षोढा गुरुभिर्निर्दशितः ।

वयं तु (न) मन्महे—रसभावाध्याययोर्वागङ्गसत्त्वजास्य (त्त) द्रसभावेषु दर्शितास्ते कथं प्रयोज्या इत्ययमध्यायः । यथा हि किराटगृहाद् गन्धद्रव्याण्यानीय गान्धिकेन समानीक्रियते अस्येयान् भाग इदं पूर्वमिति, एवमत्राध्यायेऽभिनयाः । तत्र शृङ्गारस्य प्राधान्यात् तत्रैवाभिनयानां भागयोगेन पौर्वापर्ययुक्त्या च समीकरणं सत्त्वातिरिक्त इति । तेन सामान्यानां कर्म समानीकरणं भावनप्रायमभिनयविषयं स्वयं चाभिनयरूपं सामान्याभिनयं शृङ्गारमुखेन चान्यदुपनेयमिति । तदेतत्सर्वं हृदये कृत्वा मुनिराह सामान्याभिनयो नाम ज्ञेय इति । नाम्नैव ज्ञातुं शक्योऽन्वर्थत्वादस्येति भावः । तत्तु व्याख्यातम् ।

नन्वेवं तत्र न किंचिदवशिष्यते वक्तव्यमित्याशङ्क्यावृत्याह सामान्याभिनयो नाम ज्ञेय इति । नामशब्दः प्रसिद्धिद्योतकः । तदयमर्थः—यद्यपि

* षष्ठेऽध्याये रससूत्रव्याख्याने सप्तविघ्ना उक्ताः ।

तत्र कार्यः प्रयत्नस्तु नाट्य सत्त्वे[1] प्रतिष्ठितम् ॥१॥

ज्ञेयः (स्थिर) विषये सामान्याभिनयः प्रसिद्धोऽपि वाक्यार्थबलात्, तथापि यो वागङ्गसत्त्वेभ्यो जातः तद्विषयः सामान्याभिनयो व्याख्यातः। तत्रेति विषये तन्निरूपणायामस्माकं प्रयासः कार्य एव। आहार्यो हि यद्यप्यभिनयान्तरेभ्यो न्यूनस्तथापि तस्य सिद्धस्वरूपत्वान्नात्रोपादानम्। आङ्गिकादिक्रियाणां हि पूर्वापरीभूतरूपतया सम्भावनीयवि(शेष)भावनादेकीकारात्मा सामान्याभिनयो यत्नसंपाद्य एव। आहार्यस्य तु तन्मध्ये स्थिरत्वेनावस्थानाद्यत्नसिद्ध एवासौ। अत एवाहार्येऽपि भविष्यति सामान्याभिनयचिन्ता। न तु सर्वथैवास्य तत्र त्यागः। तथा हि "वागङ्गालङ्कारैः" (२२-१४) इति लीलायां, "माल्याच्छादनविलेपनभूषणानां" (२२-१७) इति विच्छित्तौ, "वागङ्गाहार्यसत्त्ववेगेन" (२२-१७) इति विभ्रमे, तस्य सातिशयनिरूपणं भविष्यति।

अन्ये त्वाहुः—आन्तरभावानपेक्ष एवाहार्यो दण्डकमण्डल्वक्षसूत्रादिव्रतविशेषादिमात्रं गमयति, न तु भावं कंचित्। उज्ज्वलो हि वेषो न रतिं गमयति नापि मलिनः शुचम्। तदभावेऽपि हि ते भवत एव। औचित्यमात्रं ह्येतद्रतावुज्ज्वलो वेषः, शुचि मलिन इति। ये त्वेते गुणद्रव्यादिवाह्याभिनयाः सुखदुःखादिभावानिश्चायाश्च ते चित्तवृत्तीनां वाह्यार्थानां च कार्यकारणभावस्य नियतव्यक्तित्वाद् भावापेक्षा इति। वागङ्गसत्त्वाभिनया अन्योन्य सहचर्यमाणाः, नत्वेवं तेष्वाहार्य इत्यस्यानुपादानक्रिया। एतच्च न मुनेर्मतमित्यावेदितमस्माभिरुपाङ्गाभिनयाहार्याभिनयाध्याययो (८१-२२) रित्यास्ताम्।

नन्वेवं त्रितयनिष्ठो यद्यपि यत्नस्तथाप्यभिहितत्वेन किमिह वक्तव्यमित्याह नाट्यं सत्त्व इति। तुशब्दः सत्त्वशब्दानन्तरं द्रष्टव्यः। सात्त्विके त्वभिनये नाट्यं प्रतिष्ठितम्। रसमयं हि नाट्यं रसे चान्तरङ्गः सात्त्विकस्तस्मात् स एवाभ्यर्हित इति तद्गतमेव वक्तव्यं पूर्वमभिधेयमित्याशयमशेषचिरन्तना आक्षेपपूर्वकं समादधति—त्रिषूद्दिष्टेषु वक्तव्यं वागङ्गसत्त्वेषु नाट्यं प्रतिष्ठितमिति सोऽयमाक्षेपः। प्रतिसमाधानं तु यदि वागङ्गजमेव स्यात् प्रयत्नं विनापि

1. NS. सत्त्वे।

सत्त्वातिरिक्तोऽभिनयो ज्येष्ठ इत्यभिधीयते ।
समसत्त्वो भवेन्मध्यः सत्त्वहीनोऽधमः स्मृतः ॥२॥
अव्यक्तरूपं सत्त्वं हि विज्ञेयं भावसंश्रयम्[1] ।
यथास्थानरसोपेतं रोमाञ्चास्राादिभिर्गुणैः ॥३॥

---

सिद्धिः स्यात्, वागङ्गसत्त्वजोऽसौ सत्त्वे च नाट्यं प्रतिष्ठितम्, सत्त्वं च मनससमाधानजम् । तस्माद्भूयसा प्रयत्नेन विना (न) सिध्यतीति । एतत्तु चोद्यसममेवोत्तरं सत्त्वस्य हि प्रयत्नाधिक्यमुपयोगीति वागङ्गयोरुपादानमलमेवेति—अलमनेत ।

ननु कोऽत्रहेतुः सत्त्वे नाट्यं प्रतिष्ठितमित्याशङ्क्याह सत्त्वातिरिक्तोऽभिनय इति । सत्त्वमिति सात्त्विकोऽभिनयः, तेन वागङ्गा(सत्त्वा)भिनययोर्यत्लैकत्रैवाभिनये क्रमेण युगपद्वा प्रयुज्यते तत्र परे(रं?)सात्त्विकस्या(न्य)द्वयापेक्षयाधिक्यं भवति । तत्प्रशस्यतमाभिनयक्रिया(ज्येष्ठा)भवति । सुष्ठु सम्यगभिमुखीभावं सौष्ठवं नीतो भवति रसपर्यन्तत्वात्प्रीतेरिति, भावः ।

अथ सात्त्विकोऽन्यतुल्य एव, तदभिनयनं प्रशस्यं संपद्यते परमिति यावत् । यदि त्वितरापेक्षया सात्त्विको न्यूनस्तर्हि अभिनयक्रिया स्वरूपेणापूर्णा संपद्यत इत्यर्थः । सात्त्विकाभावे ह्यभिनयक्रियानामापि नोन्मीलति । अभिनयनं हि चित्तवृत्तिसाधारणतापत्तिप्राणसाक्षात्कारकल्पाध्यवसायसंपादनमिति, अत एवोक्तं सत्तवे नाट्यं प्रतिष्ठितमिति ।

अव्यक्तरूपमित्यादिकं प्रबन्धं श्रीशङ्कुकादय इत्थं नयन्ति—कस्मात् पुनः सत्त्वं प्रयत्नातिशयमपेक्षते । उच्यते—रामाद्यनुकार्यगतं भावसंश्रयं तद्भावनाप्रकर्षजं रोमाञ्चादिसंपादकं यदान्तरं नाट्यस्य सत्त्वं तदव्यक्तं अस्फुटं केवलं रोमाञ्चादिभिर्गमकत्वाद्गुणभूतैर्विज्ञेयं, अन्यथा हि सुखाद्यभावे कुत एषामुद्भव इत्यहेतुकं स्यात् । तत्र सत्त्वं भावस्य स्थाने प्रसङ्गतो यो मुख्यो रसस्तेनोपेतं, रसेनानुकार्ये च प्रकृष्टेन यत्नेन ज्ञेयं सुखादि तस्य ये रोमाञ्चादयः कार्यास्तत्त-

---

1. KSS. ज्ञेयं भावरसाश्रयम्, NS. नवरसाश्रयम् ।

-त्साध्यभावे यतः सत्त्वात्प्रवर्त्यन्ते तन्मयः प्रयोगः कथं प्रकृष्टयत्नमन्तरेण सिद्ध्ये-दिति तात्पर्यम् । न केवलं (प्रकृत) रोमाञ्चादावभिनये संपाद्ये नटस्य सत्त्वमुप-युज्यते यावदङ्गनानां येऽलङ्कारास्तेष्वपि । तथा हि ते तावत् कटककेयूरादिभ्यो-ऽप्यभि विकारानयनेऽभिनयं(?)रूपलावण्यादिवत् स्तनकेशादिवच्च युवतिरिय-मिति प्रतीयते, न त्वभिनेयं तेषां किंचिदस्ति केवलमलङ्कारत्वमेषाम् । न च प्रयोगाभिनिविष्टत्वाद्युवतेरपि प्रयोज्यास्ते प्रयोक्तुं शक्या मनस्समाधानमन्तरेण । तत्र मनसो देहवृत्तित्वात् समाधानं सत्त्वमुपचाराद्देहात्मकम् । देहे हि मन-स्समाधातव्यम्, तत्र इषद्विकारो भावः स एव प्रौढतायां तदतिशये च हावो हेला च । तथा च भावः तत्र कटकादाविव हेमः स्थितः । तत्र तु मदना-नपेक्षी विकारो भावः येनाकामयमानापि तरुणी कामयमानेन लक्ष्यते, तस्यैव तु मदनापेक्षत्वेन प्रौढतायां हेलात्वमेव, यौवने क्रमादुपचीयमाने स्वात्मेन्द्रिय-मनःस्वास्थ्ये हावः हेला शरीरविकारः धात्वादिवैषम्यात्तु तदवसादे प्रवि-लय इति हेलातो भावयुक्तो भावतैं (हावतैं ?)वेति नानपेक्षितहेत्वन्तरा यौवनकृताः शरीरविकारा अपि प्राधान्येन वक्त्रगात्रगता गुणा इव भावा इव नाभिनयाः । किं त्वीषद्भिद्यमानैर्वागाद्यभिनयैर्मुखरागेण च संभवत्तया प्रतीता अप्रतीता अलङ्कारा उच्यन्ते । तदेतदुक्तमव्यक्तरूपमित्यादिना समा-ख्याता बुधैर्हेला ललिताभिनयात्मिका (२२-११) इत्यन्तेन । एतेभ्य-स्त्वङ्गजेभ्योऽन्ये शीलकृता इति स्वाभाविक दश लीलाद्याः सत्त्वबलेनैव प्रयोज्याः । अन्ये तु निसर्गजत्वेनायत्नजाः सप्त शोभाद्या उक्ताः (२२-३२) । तत्रैते शोभाद्याः स्त्रीगताः पुरुषगताश्चान्ये । सर्वे चैते अतत्स्वभावेनापि नटेन सत्त्वबलात्प्रयोक्तव्या इति बहुप्रद(र्शनविलसितं) व्याख्यातं न ग्रन्थज्ञेभ्यो रोचते ।

तथा हि—किमिदमनुकार्य (र्यगतं ?) कवेः शिक्षार्थमुपदिश्यते, तथानु-कर्तृगतं नटस्य (वा) । प्रथमस्तावद्यदि पक्षस्तदव्यक्तरूपं सत्त्वमिति सत्त्वस्य कथं प्रयोक्तरि स्थितिः, सत्त्वाद्भावः समुत्थित इति ह्युक्तम् । नटे च सत्त्वं, अनुकार्ये च भाव इति किं केन संगच्छते । स्वनुकार्ये च प्रस्तुते प्रागल्भ्य-माधुर्ये परत्र (पात्र ?) गते उच्येते इति किमेतच्च, प्रतिलव(विलय ?) क्रमेण भावहावहेलानां परस्परकार्यकरत्वं प्रथमं तावद्व्याख्यातम्, तदप्यसत् । न हि प्रतिसंहारे कारणता कार्यस्य व्यपदिश्यते । न हि पृथिव्यादिभूतानि प्रविल-यतन्मात्राणां कारणानि, तानि चाहंकारस्य, सोऽपि च बुद्धेः, सा च प्रकृतेः, प्रकारो वा तदहङ्करणमिति व्यवहारः । प्रति (संहार इव) प्रकृतेः कार्यदशा-यामपि संभवान्न पूर्वः प्रादुर्भावः तत्कथं कार्यता तदहंकारादेः कारणत्वमेत-

अलङ्कारास्तु[1] [2]नाट्यज्ञैर्ज्ञेया भावरसाश्रया:[3] ।

दिति चेत् सामानमेतदिहापि । यदि हि भावो हावतां प्राप्त: सोऽपि हेलात्वं च ततो हेला विलीयते । आख्यास्था दोषात् तदा हाव: स्थित एव, न हेलया हेला परं कार्यकारणभावव्यवहारस्यावकाश: । किं चेते देहविकारा: प्रयत्नेन निर्वर्त्यां इति (साक्षिण इति) यदुच्यते तस्मिन्नाट्यस्य संसारे नाम तदस्ति यत्प्रयत्नेन निर्वर्त्या इति सात्त्विकाद्वैतम् । किं च विभावानुभावव्यभिचारिव्यतिरिक्तमपि यद्यत्रोपयोगि संभवति तद्वृथैव प्रतिज्ञातं तत्संयोगाद्रसनिष्पत्तिरिति, गीतातोद्यरङ्गादिबलेनेदं व्यवस्थितं सामान्याभिनय इत्यभिधानात् अनभिनयवत्त्वे चास्य सत्त्वनिर्वर्त्यस्यापि को नाट्ये उपयोग:, कथं च सामान्याभिनयेनेत्यपरामृष्टाभिधानम् । एतत्सर्वं मुनिमताननुप्रविष्टै: परं श्रद्धीयते नामेत्यास्तां तावत् ।

प्रकृतव्याख्यानमुच्यते—इहोक्तं सत्त्वे नाट्यं प्रतिष्ठितं तेन सात्त्विकभावानुनयो वक्तव्य: तस्य च किंचिदुक्तमिति दर्शयति **अव्यक्तरूपं सत्त्वं हि विज्ञेयमिति** । इह चित्तवृत्तिरेव संवेदनभूमौ संक्रान्ता देहमपि व्याप्नोति । सैव च सत्त्वमित्युच्यते । तत्र चाव्यक्तं संवित्प्राणभूमिद्वयानिपतितं यत्सत्त्वं तद्भावाध्यायसंश्रयत्वेनैव विज्ञेयम् । तस्य च ये गुणा देहपर्यन्ततां प्राप्ता घर्मरोमाञ्चादय: तेऽपि तत्रैवोक्ता: किंचित् । यथास्थानमिति यस्य रसस्य यत् स्थानं, तद्यथा शृङ्गारस्य (उत्तमौ) स्त्रीपुंसौ, रौद्रस्य रक्षोदानवादि:, भयानकस्याधमप्रकृति:, तदनतिक्रमेण रसेषूपेतं सम्बद्धं तत्सत्त्वम् । भावशब्देनात्र भावाध्याय:(उक्त:) ।

एतदुक्तं भवति—चित्तवृत्तिरूपं यत्सत्त्वं तद्भूकायसंक्रान्तप्राणदेहधर्मतावशाद् भवदपि भावाध्याये रसाध्याये च वितत्य निरूपितमिति पुन: किं तदभिधानेन ।

किं तस्य भूसत्त्वस्य रूपं वक्तव्यमित्याह **अलङ्कारास्तु नाट्यज्ञैरित्यादि** । अयमभिप्राय:—संवेदनरूपात्प्रसृतं यत्सत्त्वं तद्विचारितम् । अन्यत्तु देहधर्मत्वेनैव स्थितं सात्त्विकं, यंत: सात्त्विकेष्वेवोत्तमेषु दृश्यते, तत्र स्त्रीणामुत्तमत्वं

1. NS. च ।
2. NS. सत्त्वस्था ।
3. NS. समाश्रया: । KSS. नाट्यरसाश्रया: ।

यौवनेऽभ्यधिकाः[1] स्त्रीणां विकारा वक्त्रगात्रजाः ॥४॥

शृङ्गाररसपर्यन्तमेव, पुरुषाणां तु वीररसविश्रान्तम् । शान्तस्तु प्रधानत्वेन न प्रयोगार्ह इत्युक्तप्रायः । स्त्रीगतेन शृङ्गारेण पुरुषनिष्ठेन वीरेण च सार्वलौकिकः पुमर्थो व्याप्तः । न च सत्त्वमयमुत्तमस्त्रीरूपं विमुच्यान्यत्रामी-चेष्टालङ्कारा विनिवेशं लभन्ते (न) सात्त्विकास्तावद्राजसतामसशरीरेष्ट्वसंभवात् । चण्डालीनामपि रूपलावण्यसंपदो दृश्यन्ते, ननु चेष्टालङ्कारास्तासामपि भवन्त उत्तमतामेव सूचयन्ति स्ववर्गापेक्षया वा संपदंभ्रशादिना । एतदुक्तं भट्टतोतेन—न चालङ् कृतीनामत्र लक्षणं महदाश्रयमिति—ते च दृष्टाः सन्तः उत्तमेयं शृङ्गारसमुचितेति विभावादिसुविवेकविहीनं व्यभिचारिरूपदशान्तर-संस्पर्शशून्यं विशेषविरहितमेव सामान्यरूपं शृङ्गारमभिनयति(न्ति?), सामान्याभिनया न तु लावण्यादिवदनभिनेया एव(वं?) शरीरविकारा अनुभावा एव तेन विभावानुभावव्यभिचारिसंयोगादित्येवमेवैतत् । एवं पुरुषगता अपि शोभादय उत्साहप्रकृतिरयमित्येतावन्मात्रं गमयन्तः सामान्याभिनया एव । किं च यत्किंचिदङ्गनानां शृङ्गारोचितं चेष्टितमभिनीयते तत्रैव चेष्टालङ्कारा अवश्यमभिनेया इति सामान्यवत्सर्वावस्थानुयायित्वेनाभिनीयत इति (च) सामान्याभिनया एव प्रधानपुरुषस्य शोभादयः, तथैते वागङ्गसत्त्वाहार्याणि स्वभेदसहितानि यथासंभवं संभूयाभिप्रविष्टानि यथा किलिकिञ्चिते विच्छित्तौ विभ्रमे चेति सामान्याभिनया वागङ्गाहार्ययोगेऽपि च सत्त्वप्रधानतया सात्त्विका इत्युक्ताः ।

एवं तैरेव सामान्याभिनयैः प्रधानप्रमदापुरुषद्वारेण विश्वमेव व्याप्तम् । ते चात्राध्याये वक्तव्याः, तदाह—अलङ्कारास्त्विवति तुर्व्यतिरेके, अन्ये भावाध्यय एवोक्ताः, एते तु वक्तव्याः ते तु तत्र नोक्ताः । यत एते केवलमलंकारा देहमात्रनिष्ठाः, न तु चित्तवृत्तिरूपाः । भावसंश्रया इति रतिभावमात्रमभिनयन्तीत्यर्थः । ते हि यौवने उद्रिक्ता दृश्यन्ते बाल्ये त्वनुद्भिन्ना वार्धके तिरोभूताः । यदाह—

यावन्त एते तरुणीजनस्य भावाः समं कुट्टमितादयोऽपि ।
रात्रावदृश्यानिव तान्घटादीन्कामप्रदीपः प्रकटीकरोति ॥ इति ॥

---

1. KSS. ह्यधिकाः ।

आदौ त्रयोऽङ्गजास्तेषां[1] दश स्वाभाविकाः परे[2] ।

अयत्नजाः [3]पुनः सप्त रसभावोपबृंहिताः ॥५॥

[4]देहात्मकं भवेत्सत्त्वं सत्त्वाद्भावः समुत्थितः ।

भावात्समुत्थितो हावो हावाद्धेला समुत्थिता ॥६॥

---

वक्त्रगात्रजा इति देहविकारमात्ररूपा एव परं न हि यथा बाष्पादीनामन्तःप्राणभुवि कण्ठरोधादिरूपं लक्ष्यते, तथा चेष्टालङ्काराणाम् गात्राणि(वक्षोनितम्बा)दीनि, वक्त्रं प्राधान्यात् पुनरुपात्तम् । तत्र देहविकाराः केचन क्रियात्मका अपि ते च प्राग्जन्माभ्यन्तरिता भावसंस्कारमात्रेण सत्त्वोद्बुद्धेन देहमात्रे सति भवन्ति, त एवाङ्गजा उच्यन्ते, तथा भावो हावो हेला च । अन्ये त्वद्यतनजन्मसमुचितविशिष्टविभावानुप्रवेशस्फुटीभवद्रतिभावानुविद्धे देहे परिस्फुरन्ति । ते स्वाभाविकाः स्वस्माद्रतिभावात् हृदयगोचरीभूताद् भवन्तीति तथा कस्याश्चित् कश्चिदेव स्वभावबलाद् भवति, अन्यस्या अन्यः, कस्याश्चित् द्वौ त्रय इत्यादि, अतोऽपि स्वाभाविकाः ।

भावहावहेलास्तु सर्वा एव सर्वास्वेव सत्त्वाधिकासूत्तमाङ्गनासु भवन्ति । तथा शोभादयः सप्त । एवमङ्गजाः स्वाभाविकाश्च क्रियाजन्मानः, अन्ये तु गुणस्वभावाः शोभादयः ते चायत्नजाः । यत्नजाताः क्रियात्मका उच्यन्ते, (इच्छातो) यत्नस्ततो देहक्रियेति हि पदार्थविदः । ततोऽन्येऽयत्नजाताः । तदेतदाह—आदौ त्रयोऽङ्गजा इति । तेषामलङ्काराणां मध्ये । आदा-

---

1. KSS. प्रोक्ताः ।
2. NS. तथा ।
3. KSS., NS. तथा ।
4. इतः प्रभृति श्लोकपञ्चकस्य पाठक्रमो विभिन्नपुस्तकेषु भिन्नतया दृश्यते ।

[1]हेला हावश्च भावश्च परस्परसमुत्थिताः ।
सत्त्वभेदे भवन्त्येते शरीरे प्रकृतिस्थिताः ॥७॥
वागङ्गमुखरागैश्च सत्त्वेनाभिनयेन च ।
कवेरन्तर्गतं भावं भावयन्भाव उच्यते ॥८॥

विति प्राच्यवासनानुविद्धदेहमात्रप्रभवित्वात् पूर्वमेव भवन्तीति यावत् । भावोपबृंहिता इत्युभयशेषः । स्वाभाविका अयत्नजा स्वरतिभावेन प्राणिता भवन्ति । (अनुमति) पुनरिति सत्त्वानां, पुस्तचित्रालेख्यालिखितानामेव नैते भवन्ति । तत्र त्रयाणां तावदुपक्षेपकर्तृ पीठवन्धमाह देहात्मकं भवेत्सत्त्वमिति । शरीरस्वभावं तावत्सत्त्वं संभाव्यते उत्तमशरीरतां प्राप्तमित्यर्थः । ततो भावः ततोऽपि हावः तस्मादपि हेला । एवं तीव्रतरसत्त्वे देह एव । यदा तु तथाविद्धं सत्त्वं न भवति तदा प्राक्तनरतिवासनोत्थं अत्र सहकार्यन्तरमपेक्षणीयं वर्तत इति दर्शयति—

हेला हावश्च भावश्च परस्परसमुत्थिताः ।
सत्त्वभेदे भवन्त्येते शरीरे प्रकृतिस्थिताः ॥ इति ॥

एकश्चशब्दोऽपिशब्दार्थे, अपरः समुच्चये । प्रत्येकं हि समुच्चये द्योत्ये तृतीयोऽपि चः पठितव्यः स्यात् । तदयमर्थः—प्र(कृ)तिस्थिताः देहस्वभावमात्रापेक्षा अप्येते परस्परसमुत्थिता भवन्ति । तथा हि—कुमारीशरीरे प्रौढतमकुमार्यन्तरगतहेलावलोकने सति हावोद्भवो भावश्चेदुल्लासितपूर्वः, अन्यथा हि भावस्यैवोद्भवः । एवं हावेऽपि दृष्टे भावो हेला वा । यदा तु हावावस्थोद्भिन्ना पूर्वं परत्र च हेला दृश्यते तदा हेलातोऽपि हेला । एवं हावाद्धावो भावाद्भाव इति च वाच्यम् । एवं परकीयभावादिश्रवणात् तथाविधेयाभिधेयरमणीयकाव्याकर्णनादेरपि हेलादीनां प्रबोधो भवतीति मन्तव्यम् । एतदन्योन्यसमुत्थितत्वम् ।

ननु यद्येते प्रकृतिस्थितास्तत एवाङ्गजास्तत्किमन्यापेक्षणेनेत्याह (वागङ्गेत्यादिना) । वागङ्गमुखरागेणेत्यादिपाठः परं भावाध्यायश्लोको नास्य तुल्यो-

---

1. KSS., NS. च भावो हावश्च हेला च ।

[भावस्यातिकृतं सत्त्वं व्यतिरिक्तं स्वयोनिषु ।
नैकावस्थान्तरकृतं [1]भावं तमिह निर्दिशेत्] ॥९॥
तत्राक्षिभ्रूविकाराढ्यः शृङ्गाराकारसूचकः[2] ।
सग्रीवारेचको ज्ञेयो हावः[3] स्थितसमुत्थितः ॥१०॥

ऽर्थस्त्वन्य एव, न तु श्रीशङ्कुकेनार्थं(र्धं ?) एकार्थं मन्तव्यम् । एवं चित्तवृत्तिलक्षणं देहधर्मस्येति सर्वसंमतम् । तस्मादयमर्थः—वागङ्गमुखरागैः सत्त्वेन च लक्षितो भावः वागङ्गसत्त्वविशेष एव बालिकाया भाव इत्युच्यत इत्यर्थः । किमपि विशेषो नेत्याह । किं त्वन्तर्गतं वासनात्मतया वर्तमानं रसाख्यं भावं भावयन्सूययन् किं सर्वस्य नेत्याह कवेः सूक्ष्मसूक्ष्मानपि योऽर्थान् पश्यति तस्य सहृदयस्येत्यर्थः ।

एतदुक्तं भवति—उत्तमाधमरूपे कुमारीद्वितये व्यवहरति (एकायाः) वाक् स्पन्दते चक्षुरादिव्यापारः क्रीडनकावहारखेदजनितमुखवैवर्ण्यं बाष्पादि च पश्यतः हृदयस्य भवति तावद्विशेषोल्लासिनी अभिनयजनितेवानुमातृरूपा अपि तु विशेषाध्यवसायिनी मतिः, महतीयं काचिन्नायिकाभविष्यतीति । तथाविधं यद्वागादेरान्तररतिवासनासद्भावसमुपनतं किंचिद्विशिष्टरूपत्वं स देहविकारविशेषो भावः । चशब्द एक इवशब्दार्थे, अभिनयतुल्यो वागादिभिर्लक्षितो भाव इत्यर्थः ।

तत्रेति तत्पुरुष एव (उत्तमाङ्गना) पात्रलक्षणेन चोद्भ्रूनारकचिबुकग्रीवादेः सातिशयो विकाररूपो धर्मः, अत एव शृङ्गारोचितमाकारं सहृदयासहृदयसर्वजनहृदयं सूचयतीति । हावः—एष हि स्वचित्तवृत्ति परत्र जुह्वतीं ददतीं ता कुमारीं ह्वावयति । स्थितसमुत्थित इति स्थितः स्वयं समुत्थितः स्वेत्यु(स्वतः?) द्भिद्योद्भिद्य विश्राम्यन् हावः, स तु प्रसरणैकधर्मकः, तथा हि हेला स्यात्, अत एवायं सुकुमारपरिकरसब्रह्मचारीति दर्शितम् । हावावस्थायां यत्स्वयं रतेः प्रबोधनं न मन्यते केवलं तत्संस्कारबलात्तथाविकारान् करोति । यैर्द्रष्टा तथा कल्पयति । यदा तु रतिवासनाप्रबोधात्तां प्रबुद्धां रतिमभिमयन्ते केवलं

1. KSS., NS. हावं ।
2. KSS., NS. रससूचकः ।
3. KSS., NS. भावः ।

[1]यो वै हावः स एवैषा शृङ्गाररससंभवा ।
समाख्याता बुधैर्हेला ललिताभिनयात्मिका ॥११॥

समुचितविभावोपग्रहविरहान्निर्विषयतया स्फुटीभावं न प्रतिपद्यते तदा तज्जनितो देहविकारविशेषो हेला। 'हिल भावकारण' इति (धातुपाठे) पठ्यते । भावस्य संवन्धादिति या प्रसरता वेगवाहित्वमित्यर्थः । वेगेन गच्छत् हेलतीत्युच्यते लोके । तदाह शृङ्गारेति । शृङ्गाररसो रतिः ततो हृदये स्थिता या हेला संभवतीत्यर्थः । तथा शृङ्गारस्य रस(स्य?) मानतायां यादृक्साधारणमिव रूपं तस्य संभवः संभावना या स्यात् सामाजिकशृङ्गार रसास्वादसदृशरूपैव संभावना चमत्कारमात्रप्राणा । तथा हि तस्या यावद्विषयार्जनं किंचिदवभाति विभावविशेषापरिस्फुरणादिति वरसुन्दर (रूपोत्कीर्ण) ग्रावकल्पशैशवदशोत्तीर्णतारुण्योन्मीलना अत एव ललिता चेष्टा अभिनयरूपतामिव अस्यां विकारावेशातिशयवशात् न प्रतिलभते । क्रमेणोदाहरणान्येषाम्—

उत्तालालकभञ्जनानि कवरीभारोऽथ शिक्षारसो
दन्तानां परिकर्म नीविनहनं भ्रूलास्ययोग्याग्रहः ।
तिर्यग्लोचनवलितानि वचसां छेकोक्तिसंक्रान्तयः
स्त्रीणां म्लायति शैशवे प्रतिकलं कोऽप्येष केलीक्रमः ॥(विद्ध१)

स्मितं किंचिन्मुग्धं तरलमधुरो दृष्टिविभवः
परिस्पन्दो वाचामभिनयविलासोक्तिसरसः ।
गतानामारम्भः किसलयितलीलापरिकरः
स्पृशन्त्यास्तारुण्यं किमिव हि न रम्यं मृगदृशः ॥

कुरङ्गीवाङ्गानि स्तिमितयति गीतध्वनिषु यत्
सखीं कान्तोदन्तं श्रुतमपि पुनः प्रश्नयति यत् ।
अनिद्रं यच्चान्तः स्वपिति तदहो वेद्म्यभिनवां
प्रवृत्तोऽस्याः सेक्तुं हृदि मनसिजः प्रेमलतिकाम् ॥

1. KSS., NS. य एव भावाः सर्वेषां शृंगाररससंश्रया ।

बाह्या चाभ्यन्तरा चैव स्याद्वाह्याभ्यन्तरापरा ।।१५२।।

कुलीनाभ्यन्तरा ज्ञेया बाह्या वेश्याङ्गना स्मृता ।

कृतशौचा तु[1] या नारी सा बाह्याभ्यन्तरा स्मृता ।।१५३।।

अन्तः पुरोपचारे तु कुलजा कन्यकापि वा[2] ।

न हि राजोपचारे तु[3] बाह्यस्त्रीभोग इष्यते ।।१५४।।

आभ्यन्तरो भवेद्राज्ञो बाह्यो[4] बाह्यजनस्य च[5] ।

दिव्यवेशाङ्गनानां हि राज्ञां भवति सङ्गमः ।।१५५।।

[6]कुलजाकामितं यच्च तज्ज्ञेयं कन्यकास्वपि ।

या चापि वेश्या साप्यत्र यथैव कुलजा तथा ।।१५६।।

इह कामसमुत्पत्तिर्नानाभाव[7]समुद्भवा ।

स्त्रीणां वा पुरुषाणां वा उत्तमाधममध्यमा ।।१५७।।

---

इत्यादिना क्रमेणेत्यर्थः । राज्ञामभ्यन्तर एव नाटके भोगः, न तु राज्ञामेवेति । वेशो गणिकानां स्थानं तत्र भवाः वेश्याः । (कृतशौचेति) कृतं शौचं शुद्धशील-त्वमेकान्तावरुद्धत्वेन यस्याः, सा च वेश्या पुनर्भवा । कन्येति गणिका कुमार्यपी-त्यर्थः । न हि राजोपचारे तु बाह्यस्त्रीभोग इत्यस्यापवादमाह—दिव्यवेश्येत्यादि । यथा पुरूरवसः उर्वश्या ।

---

1. GOS. तु ।
2. KSS., NS. read an additional line—न हि राजोपचारेषु कुलजा कन्यकाऽपि वा ।
3. KSS., NS. उपचारेषु ।
4. KSS., NS. बाह्ये ।
5. KSS., NS. वा ।
6. KSS., NS. कुलजानां मतं ।
7. KSS., NS. बीज ।

श्रवणाद्दर्शनाद्रूपादङ्गलीलाविचेष्टितैः ।

मधुरैश्च समालापैः[1] कामः समुपजायते ॥१५८॥

रूपगुणादिसमेतं कलादिविज्ञानयौवनोपेतम् ।

दृष्ट्वा पुरुषविशेषं नारी मदनातुरा भवति ॥१५९॥

ततः कामयमानानां नृणां स्त्रीणामथापि च ।

कामभावेङ्गितानीह तज्ज्ञः समुपलक्षयेत् ॥१६०॥

---

कामोपचार इति प्रस्तुतस्तत्र कामस्य कथमुत्पत्तिरित्याह—श्रवणादिति सर्वत्र शेषः । सीतायाः श्रवणाद्रावणस्य, शकुन्तलादर्शनाद् दुष्यन्तस्य ।

रूपं चित्रादि प्रतिकृतिः, ततो वत्सेशस्य दृष्टेऽप्याकारे कामोऽनुत्पद्यमानोऽङ्गलीलालक्षणाद्विचेष्टितादुपजायते, नष्टरागप्रत्यानयनं वा ततो भवति, यथा विशाखदेवस्य निवद्धेऽभिसारिकावन्धितके (वञ्चितके ?) वत्सेशस्य पद्मावतीभद्रशवरीवेषाद्याचरणरूपाल्लीलाचेष्टितात् कामावृत्तिराख्याता । एवं मधुरेऽप्यालापे मन्तव्यम् । माधुर्यमर्थद्वारेण स्वरूपतः । चकारेणान्यदपि निमित्तं दर्शयति । यथा तापसवत्सराजचरिते पद्मावतीं प्रति कामोत्पत्तिर्वत्सेश्वरस्य निमित्तमत्यन्तानुवृत्तिर्नाम । तथा चाह—

मयि मनः प्रणिधाय धृता जटा
न गणितः स्वजनो न नवं वयः ।
अनुगमैरिति मामनुरागिणी
व्यवसितादपनेतुमिवेच्छति ॥ इति । (४-८)

कामभावः कामाख्यश्चित्तवृत्तिः, तत्कृतानीङ्गितानि शरीरविकारा इत्यर्थः,

---

1. KSS., NS. मधुरैः सम्प्रलापैश्च ।
2. KSS., NS. read it after the verse.—ततः कामयमानानां ।

ललिता चलपक्ष्मा च [1]तथा च मुकुलेक्षणा ।
त्रस्तोत्तरपुटा[2] चैव काम्या दृष्टिर्भवेदिह ॥१६१॥
[3][वलितान्ता सलालित्यसंमितैर्व्यञ्जितैस्तथा[4] ।
दृष्टिः सा ललिता नाम स्त्रीणामर्धावलोकने ॥]१६२॥
ईषत्संरक्त[5]गण्डस्तु सस्वेदलवचित्रितः ।
[6]प्रस्पन्दमानरोमाञ्चो मुखरागो भवेदिह[7] ॥१६३॥
काम्येनाङ्गविकारेण सकटाक्षनिरीक्षितैः ।
तथाभरणसंस्पर्शैः[8] कर्णकण्डूयनैरपि[9] ॥१६४॥
अङ्गुष्ठाग्रविलिखनैः[10] स्तननाभिप्रदर्शनैः[11] ।
नखनिस्तोदनाच्चैव[12] केशसंयमनादपि ॥१६५॥
वेश्यामेवं विधैर्भावैर्लक्षयेन्मदनातुराम् ।
कुलजायास्तथा चैव [13]प्रवक्ष्यामीङ्गितानि तु ॥१६६॥
प्रहसन्ती व नेत्राभ्यां प्रततं च निरीक्षते ।
स्मयते [14]सा निगूढं च [15]वाचं चाधोमुखी वदेत् ॥१६७॥

---

1. KSS., NS. सास्रा मुकुलितेक्षणा ।
2. KSS., NS. यदा ।
3. KSS., NS. पलितान्ता ।
4. KSS., NS. सदा ।
5. KSS., NS. कण्ठश्च स्वेदबिन्दुविचित्रितः ।
6. KSS., NS. प्रस्यन्द ।
7. KSS., NS. तु कामजः ।
8. KSS., NS. संस्पर्शात् ।
9. KSS.,, NS. कण्डूयनाद् ।
10. KSS., NS. विलिखेन ।
11. KSS., NS. प्रदर्शनात् ।
12. KSS., NS. चापि ।
13. KSS. विज्ञेयानि ।
14. KSS. च ।
15. KSS., NS वाक्यं ।

स्मितोत्तरा मन्दवाक्या स्वेदाकारनिगूहनी[1] ।
प्रस्पन्दिताधरा चैव चकिता च कुलाङ्गना ॥१६८॥

एवंविधैः कामलिङ्गैरप्राप्तसुरतोत्सवा ।
[2]दशस्थानगतं कामं नानाभावैः[3] प्रदर्शयेत्[4] ॥१६९॥

प्रथमे त्वभिलाषः स्याद् द्वितीये चिन्तनं भवेत् ।
अनुस्मृतिस्तृतीये तु चतुर्थे गुणकीर्तनम् ॥१७०॥

उद्वेगः पञ्चमे प्रोक्तो विलापः षष्ठ उच्यते ।
उन्मादः सप्तमे ज्ञेयो भवेद्व्याधिस्तथाष्टमे ॥१७१॥

नवमे जडता चैव दशमे मरणं भवेत् ।

---

अप्राप्तसुरतोत्सवेति प्राप्तसंभोगत्वे तु नैते विकाराः प्रादुर्भवन्ति । यदा तु काम उदितस्तदादेः प्राप्तसंभोगता कामावस्थानामुदय एव तथा च प्राप्त-संभोगतायामपि विप्रलम्भे *कुसमसदृक्षादिमहिमानं प्राप्ते कामिजनसंभोगे भवन्त्येवैता अवस्थाः । तथा च भट्टतोतेनोक्तम्—

कामावस्था न शृङ्गारः क्वचिदासां तदङ्गता । इति

पूर्वंप्राप्तसंभोगतायामपि शृङ्गाराङ्गतेति यावत् । अप्राप्तसंभोगित्वेऽपि हि साग-रिकावत्सराजयोर्दर्शितः शृङ्गारो रसाध्याये ।

अभिलाषात्मकः कामः क्रमादीदृशीर्दशाः प्रतिपद्यत इत्याह प्रथमे त्वभि-

---

1. KSS. निगूहना ।
2. KSS. NS. दशावस्थागतं ।
3. NS. नानाभावं ।
4. KSS. प्रकाशयेत् ।

*कामसूत्रं—III-२. (कुसुमसधर्माणो हि योषितः)

स्त्रीपुंसयोरेष विधिर्लक्षणं च निबोधत ॥१७२॥

व्यवसायात्समारब्धः संकल्पेच्छासमुद्भवः ।

समागमोपायकृतः सोऽभिलाषः प्रकीर्तितः ॥१७३॥

निर्याति विशति च मुहुः [1]करोति चाकारमेव मदनस्य ।

तिष्ठति च दर्शनपथे प्रथमस्थाने स्थिता कामे ॥१७४॥

केनोपायेन संप्राप्तिः कथं वासौ[2] भवेन्मम ।

दूतीनिवेदितैर्भावै[3]रिति चिन्तां निदर्शयेत् ॥१७५॥

आकेक[4]रार्धविप्रेक्षितानि वलयरशनापरामर्शः ।

नीवी[5]नाभ्योः संस्पर्शनं च कार्यं द्वितीये तु ॥१७६॥

---

लाष इत्यादि । अत्र व्यभिचारिण एव (केचित्) कामावस्था लक्षणान्तर-योगादिह पुनस्ताः । व्यवसायादिति काम्यजनज्ञानं तत्संकल्पपूर्वकेच्छा तत उद्भव उद्रिक्तत्वमस्येति समागमोपायस्य तद्विषयस्य चिन्ता विषयस्य द्वितीयावस्थात्मनः कृतं करणं यतो वक्ष्यति हि केनोपायेन संप्राप्यत इति चिन्तनीयाद्यवस्थासहचरितं कार्यं, वाग्व्यापाराद्युचितः शब्दश्चान्यसाहचर्यादित्याह निर्याति विशति चेत्यादि । मदनस्याकार अपाक्रियते येन दृष्टचादिविशेषेण दर्शनपथ इति तं यत्र पश्येत तेन वा दृश्येतेत्यर्थः । दूतीनिवेदितैर्भावैः मनोरथैरित्युपलक्षणं स्वकल्पितैरपीत्यर्थः आकेकरमिति विचलमविचलं विप्रेक्षितम् ।

---

1. KSS. निर्गच्छति प्रविशति च ।
2. KSS. NS. संभवेत् ।
3. KSS. वाक्यैः ।
4. KSS. अक्षि ।
5. KSS. नाभ्यूरूणां स्पर्शः कार्यो ।

मुहुर्मुहुर्निःश्वसितैर्मनोरथविचिन्तनैः ।
[1]प्रद्वेषाच्चान्यकार्याणामनुस्मृतिरुदाहृता ॥१७७॥
नैवासने न शयने धृतिमुपलभते स्वकर्मणि विहस्ता ।
[2]तच्चिन्तोपगतत्वात् तृतीयमेवं प्रयुञ्जीत ॥१७८॥
अङ्गप्रत्यङ्गलीलाभिर्वाक्चेष्टाहसितेक्षितैः[3] ।
नास्त्यन्यः सदृशस्तेनेत्येतत् स्याद् गुणकीर्तनम् ॥१७९॥
गुणकीर्तनोल्लुकसनै[4]रश्रुस्वेदापमार्जनैश्चापि ।
[5]दूत्यविरहविस्रम्भैरभिनययोगश्चतुर्थे तु ॥१८०॥
आसने शयने चापि न तुष्यति न तिष्ठति[6] ।
नित्यमेवोत्सुका च स्यादुद्वेगस्थानमाश्रिता[7] ॥१८१॥
चिन्तानिःश्वासखेदेन हृद्दाहाभिनयेन च ।
कुर्यात्तदेव[8]मत्यन्तमुद्वेगाभिनयेन च ॥१८२॥
इह स्थित इहासीन [9]इह चोपगतो मया ।

---

विहस्तेति अशक्ता । दूत्या अविरह इति समासः । उद्वेगाख्यं स्थानमवस्था । उद्वेगाभिनयो निर्वेदे दर्शितः । रुदितनिःश्वसितादिः पूर्वावस्थाया उत्तरावस्था-

---

1. KSS. NS. प्रद्वेषत्त्वन्य ।
2. KSS., NS. न ।
3. KSS., NS. ईक्षणैः ।
4. KSS., NS. कुशलैः ।
5. KSS., NS. दूत्या विरहविशुम्भैः ।
6. KSS., NS. वापि न कुप्यति न हृष्यति ।
7. KSS., NS. एव तु ।
8. KSS., NS. तदेव कुर्यात् ।
9. KSS., NS. इहायापगते ।

इति तैस्तै[1]र्विलपितैर्विलापं संप्रयोजयेत्[2] ॥१८३॥

उद्विग्नात्यर्थमौत्सुक्यादधृत्या च विलापिनी ।
ततस्ततश्च भ्रमति विलापस्थानमाश्रिता[3] ॥१८४॥

[4]तत्संश्रितां कथां युङ्क्ते सर्वावस्थागतापि हि ।
[5]पुंसः प्रद्वेष्टि चाप्यन्यानुन्मादः संप्रकीर्तितः ॥१८५॥

तिष्ठत्यनिमिषदृष्टिर्दीर्घं निःश्वसिति गच्छति ध्यानम् ।
रोदिति विहारकाले नाट्यमिदं स्यात्तथोन्मादे ॥१८६॥

सामदानार्थ[6]संभोगैः काम्यैः [7]संप्रेषणैरपि ।
सर्वै[8]र्निराकृतैः पश्चाद् व्याधि समुपजायते ॥१८७॥

---

न्तरीभवतीति दर्शयति उद्विग्ना सती विलापिनी भवतीति । सर्वावस्थागतापीति गुरुजनसन्निधावपीति, अनेनोन्मादत्वं स्फुटयति । विहारकाल इति क्रीडोचितेषु कालेषु रोदितीत्यर्थः । नाट्यमिति न तु पटशकलवक्रशरावाद्यत्रोन्मादोक्तमिति भावः । इयत्युन्मादपर्यन्ते प्राप्ते चित्तवृत्तिभवे कामे शरीरमप्यन्यथाभवतीत्याह सर्वैर्निराकृतैः पश्चाद्व्याधिरिति । निराकृतैः विफलीभूतैः । मुह्यतीत्यत्र हेतुः,

---

1. KSS., NS. विलापेऽपि ।
2. KSS., NS. प्रयोजयेत् ।
3. KSS., NS. आपि हि (?) ।
4. KSS., NS. do not read it.
5. KSS., NS. प्रद्वेष्टि चापरान्पुंसो यत्रोन्मादः स उच्यते ।
6. KSS., NS. साभोगैः ।
7. KSS., NS. सम्प्रेक्षणैः ।
8. KSS., NS. अवशीकरणात् ।

[1]मुह्यति हृदयं क्वापि प्रयाति शिरसश्च वेदना तीव्रा ।
न धृतिं चाप्युपलभते ह्यष्टममेवं प्रयुञ्जीत[2] ॥१८८॥

पृष्टा न किंचित् प्रब्रूते न शृणोति न पश्यति ।
[3]हाकष्टवाक्या तूष्णीका जडतायां गतस्मृतिः ॥१८९॥

अकाण्डे दत्तहुंकारा तथा प्रशिथिलाङ्गिका ।
[4]श्वासग्रस्तानना चैव जडताभिनये भवेत् ॥१९०॥

सर्वैः कृतैः प्रतीकारैर्यदि नास्ति समागमः ।
कामाग्निना प्रदीप्ताया जायते मरणं ततः ॥१९१॥

एवं स्थानानि कार्याणि कामतन्त्रं समीक्ष्य तु[5] ।
अप्राप्तौ यानि काम्यस्य वर्जयित्वा तु नैधनम् ॥१९२॥

विविधैः पुरुषोऽप्येवं विप्रलम्भसमुद्भवैः ।
भावैरेतानि कामस्य नानारूपाणि योजयेत् ॥१९३॥

एवं काम्यमानानां स्त्रीणां नृणामथापि वा ।

---

यतो हृदयं नावतिष्ठति । हा कष्टमिति एतद्वचतिरेकेण तूष्णीका एतदेव भाष्यत इति यावत् । प्रतीकारैरिति समागमोपायैरित्यर्थः । नैधनं मरणम् । नानारूपाणीति अवस्था इत्यर्थः ।

---

1. KSS., NS. युध्यति ।
2. KSS., NS. त्वभिनयेत् ।
3. KSS., NS. हा कष्टाष्टमतूष्णीका ।
4. KSS., NS. श्वासाग्रे स्थाननासेव ।
5. KSS., NS. समीक्षया ।

सामान्यगुणयोगेन युञ्जीताभिनयं बुधः[1] ॥१९४॥

चिन्ता[2]निःश्वासखेदेन हृद्दाहाभिनयेन च ।

[3]तथानुगमनाच्चापि तथैवाध्वनिरीक्षणात् ॥१९५॥

आकाशवीक्षणाच्चापि तथा दीनप्रभाषणात् ।

स्पर्शनान्मोटनाच्चापि तथा [4]सापाश्रयाश्रयात् ॥१९६॥

एभिर्नानाश्रयोत्पन्नैर्विप्रलम्भसमुद्भवैः ।

कामस्थानानि सर्वाणि भूयिष्ठं संप्रयोजयेत् ॥१९७॥

स्रजो भूषणगन्धांश्च गृहान्युपवनानि च ।

कामाग्निना दह्यमानः शीतलानि निषेवते ॥१९८॥

प्रदह्यमानः कामार्तो बहुस्थान[5]सर्मर्दितः ।

प्रेषयेत्कामतो दूतीमा[6]त्मावस्थाप्रदर्शिनीम् ॥१९९॥

सन्देशं चैव दूत्यास्तु प्रदद्यान्मदनाश्रयम् ।

---

पुरुषस्य सुलभोपायत्वान्मध्य एव समागमः शक्यक्रियः, न तु योषितामित्याशयेन कामावस्थाः स्त्रीषूपदिष्टाः, पुरुषेष्वतिदिष्टाः ।

स्रजो भूषणगन्धांश्चेत्यादिना यदुक्तं तद्यथायोगमवस्थातुं योज्यम् ।

---

1. इतोऽग्रे KSS., NS. पुस्तकयोः 'ललिता चलपक्ष्मा·········'इत्यादि श्लोकद्वयमधिकं वर्तते ।
2. KSS., NS. अतित्रास ।
3. KSS., NS तथागुणनाया ।
4. KSS., NS. पापा समाश्रयेत् ।
5. KSS., NS. समन्वितः ।
6. KSS., NS. तु स्व ।

तस्येयं [1]समवस्थेति कथयेद्विनयेन सा ॥२००॥
[2]अथावेदितभावार्थो रत्युपायं विचिन्तयेत् ।
अयं विधिर्विधानज्ञैः कार्यः प्रच्छन्नकामिते[3] ॥२०१॥

विधिं राजोपचारस्य पुनर्वक्ष्यामि तत्त्वतः ।
अभ्यन्तरगतं सम्यक् कामतन्त्रसमुत्थितम्[4] ॥२०२॥
[5]सुखदुःखकृतान् भावान् नानाशीलसमुत्थितान् ।
यान्यान् प्रकुरुते राजा तान्स्तान् लोकोऽनुवर्तते ॥२०३॥
न दुर्लभाः पार्थिवानां स्त्र्यर्थमाज्ञाकृता[6] गुणाः ।
दाक्षिण्यात्तु समुद्भूतः कामो रतिकरो भवेत् ॥२०४॥
बहुमानेन [7]देवीनां वल्लभानां भयेन च ।

---

प्रच्छन्नकामितं नायिकान्तरेभ्यः सन्निध्रियमाणमित्यर्थः ।

ननु राज्ञां किमशक्यं येन दूतीप्रेषणादिप्रयासमनुभवन्तीत्याह—न दुर्लभाः पार्थिवानामित्यादि । आज्ञाकृता गुणा उपायाः उप प्रलम्भादुदाहरणात् अय इत्यर्थः । राज्ञां ये उपाया इति सम्बन्धषष्ठी तेन बलार्थेऽभिमतनिषेधः । दाक्षिण्यादित्युभयविषयम्, पूर्वनायिकासु च दाक्षिण्यं, अभिलषणीयप्रमदाकृतं च दाक्षिण्यम्, तस्या राजविषयं प्रेमेत्यर्थः । कुतः प्रच्छन्नत्वमित्याह—बहुमानेनेति कर्मषष्ठी । देव्यो हि प्राप्ताभिषेका अवश्यं राज्ञा बहुत्वेनोत्कृष्टत्वेन माननीयः ।

---

1. KSS., NS. समयस्थ ।
2. KSS., NS. अथ वेदितभावार्थैः ।
3. KSS., NS. कामाभिः ।
4. KSS., NS. कामतन्त्रे समुपस्थितम् ,
5. KSS., NS. सुखदः स्वकृतान् ।
6. KSS., NS. कृतो गुणः ।
7. KSS., NS. देवानां ।

[1]प्रच्छन्नकामितं राज्ञा कार्यं परिजनं प्रति ॥२०५॥
यद्यप्यस्ति नरेन्द्राणां[2] कामतन्त्रमनेकधा।
[3]प्रच्छन्नकामितं यत्तु तद्धि रतिकरं भवेत् ॥२०६॥
यद्वामाभिनिवेशित्वं [4]यतश्च विनिवार्यते।
दुर्लभत्वं च [5]यन्नार्याः सा कामस्य परा रतिः ॥२०७॥
राज्ञामन्तः पुरजने दिवासंभोग इष्यते।
वासोपचारो यश्चैषां[6] स रात्रौ परिकीर्तितः ॥२०८॥

---

अनेकधेति विवाहितावरुद्धेत्यादिनेत्यर्थः। वामाभिनिवेशित्वमिति "सुलभावमानी हि मदन" इति विघ्नः, तथाप्यभिलष्यमाणं वस्तु प्राप्तं चेत् कोऽभिलाषः, तेन प्राप्तं प्राप्तमपहारितमिव गतं, गतं प्राप्तमिवेत्येवम्। (दुर्लभत्वमित्यादि) पराक्रमेण (विद्धि) विष्णुरयं काम उत्तमतमां प्रीतिं प्रतिप्रतनोति न ह्यत्र यायामिव (भयादिव ?) निवृत्तिः साध्या, अपि तु भौमात्मकं सुखं भोगस्त्वसति कामे तेन (केन ?) प्रत्युत संभवनीयः। रतिरिति तद्धेतुत्वादित्यर्थः।

अथ स्पष्टकामितमाह—राज्ञामन्तःपुरजने (दिवा) संभोग इति। संभोगः परस्परावलोकनप्रणयकलहसङ्गीतकादि। यथोक्तम्—"तद्वक्त्रेन्दुविलोकनेन दिवसो नीतः"* इति। अन्तःपुरजनोऽत्र ऊढा, पुनर्भूः, अवरुद्धगणिका, कन्यकाप्रेष्याविषयं तु प्रच्छन्नकामितमुक्तम्।

---

1. KSS., NS. प्रच्छन्नकामिनां राज्ञां।
2. KSS., NS. नृपाणां तु।
3. KSS., NS. प्रच्छन्ने कामिनं वक्तुं।
4. KSS., NS. यतश्चैव निवार्यते।
5. KSS., NS. यत्र।
6. KSS., NS. चैव।

* तद्वक्त्रेन्दुविलोकनेन दिवसो नीतः प्रदोषस्तथा
तद्गोष्ठ्यैव निशापि मन्मथकृतोत्साहैस्तदङ्गार्पणैः।
तां संप्रत्यपि मार्गदत्तनयनां द्रष्टुं प्रवृत्तस्य मे
बद्धोत्कण्ठमिदं पुनः किमथवा प्रेमा समाप्तोत्सवः॥ तापस १—१६.

[1]परिपाट्यां फलार्थे वा नवे प्रसव एव वा ।

दुःखे चैव [2]प्रमोदे च षडेते वासकाः स्मृताः ॥२०९॥

उचिते वासके स्त्रीणामृतुकालेऽपि वा नृपैः[3] ।

प्रेष्याणामथवेष्टानां कार्यं चैवोपसर्पणम् ॥२१०॥

---

प्रभूतान्तरपूर्वस्य वासकवृत्तान्तमाह—

परिपाट्यां फलार्थे वा नवे प्रसव एव वा ।

दुःखे चैव प्रमोदे च षडेते वासकाः स्मृताः ॥ इति

परिपाटिर्यथाकल्पितानुपूर्वी अस्या एकेन भिन्नेन वारः, अस्या द्वाभ्यामित्यादि । तदपवादमाह—फलार्थं इति ऋताविति यावत् । नव इति नवत्वे प्रसवे वृत्ते चिरविरहखिन्ना सुखायितं दुःखे तदीयबन्धुव्यापत्त्या दुःखिता आश्वासनीयेति । प्रमोद इति तदीयपुत्रोत्सवादौ 'उत्सवो हि माननीय' इत्युक्तम् । वासयति तत्र स्थाने रात्रिमिति वासः । अत्र उचितः कामोपचारः फलार्थं इत्यस्य हेतोः सर्वापवादकत्वं दर्शयितुं धर्मवृत्तिना राज्ञा परिचार्यो द्वेष्या दुर्भगा अपि सेव्या इति निरूपयितुमाह—

उचिते वासके स्त्रीणामृतुकालेऽपि वा नृपैः ।

प्रेष्याणामपि सर्वासां कार्यं (चैवोपसर्पणम्) ॥ इति

आर्तवकालो हि भूयानपि फलतः परमिति भवति । यथोक्तम्—

ऋतुः षोडश तत्राद्याश्चतस्त्रो दशमात्परा

त्रयोदशी च निन्द्याः स्युरयुगाः कन्यकोद्भवाः ।

षष्ठ्यष्टमी च दशमी द्वाभ्यां वर्णेश्च साधिका

युग्मा पुत्राय रात्रिः स्यात् ॥ इति ।

---

1. KSS., NS. परिपाट्या फलार्थे वा न च प्रमद एव च ।
2. KSS., NS. प्रमादे ।
3. KSS. नृपः ।

तत्र वासकसज्जा च विरहोत्कण्ठितापि वा ।
स्वाधीनभर्तृका चापि[1] कलहान्तरितापि वा ॥२११॥
खण्डिता विप्रलब्धा वा तथा प्रोषितभर्तृका ।
तथाभिसारिका चैव ज्ञेयास्त्वष्टौ तु नायिकाः[2] ॥२१२॥
उचिते वासके या तु रतिसंभोगलालसा ।
[3]मण्डनं कुरुते हृष्टा सा वै वासकसज्जिका[4] ॥२१३॥
अनेककार्यव्यासङ्गाद्यस्या नागच्छति प्रियः ।
[5]तदनागतदुःखार्ता विरहोत्कण्ठिता तु सा[6] ॥२१४॥
सुरतातिरसैर्बद्धो यस्याः [7]पार्श्वे तु नायकः ।

---

तत्रापि नक्षत्रविशेषपरिवर्जनम् । पुत्रश्च राज्ञां मुख्यफलम्, यथाह 'प्रजायै गृहमेधिनाम्' (रघु—१) इति । अत्र तु वृद्धपशुव्यो (पशवो ?) वदन्ति—

मासपसूआ······(षण्) मासगब्भिणी एकदिअहज्जरमुहे······ ।* (इति यत्तन्निषिद्धं स्मृतौ वैद्यके च ।)

वासकभावाभावभावितान्नायिकाभेदान्दर्शयति अत्र (तत्र?) वासकसज्जेति । एताः क्रमेण लक्षयति **उचिते वासक** इत्यादिना । उचितः पूर्वोक्तेन नयेनायातः **लालसा** साभिलाषा ।

---

1. KSS., NS. पतिका वापि
2. KSS., NS. इत्यष्टौ नायिका स्मृताः ।
3. KSS., NS. मङ्गलं ।
4. KSS., NS. सज्जिता ।
5. KSS., NS. तस्यानुगम ।
6. KSS., NS. मता ।
7. KSS., NS. पार्श्वगतः प्रियः ।

*अपूर्णा चास्फुटार्थेयं गाथा कोक्कोकवचनस्य मूलं स्यात् । यथा—

रङ्गादिश्रान्तदेहा चिरविरहवती मासमात्रप्रसूता
गर्भालस्या च नव्यज्वरयुततनुका त्यक्तमानप्रसन्ना ।
स्नाता पुष्पावसाने नवरतिसमये मेघकाले वसन्ते
प्रायस्संपन्नरागा मृगशिशुनयना स्वल्पसाध्या रते स्यात् ॥

[1]सान्द्रामोदगुणप्राप्ता भवेत् स्वाधीनभर्तृका ॥२१५॥
ईर्ष्याकलहनिष्क्रान्तो यस्या नागच्छति प्रियः ।
[2]सामर्षवशसंप्राप्ता कलहान्तरिता भवेत् ॥२१६॥
व्यासङ्गादुचिते यस्यां वासके नागतः प्रियः ।
तदनागमदुःखार्ता[3] खण्डिता सा प्रकीर्तिता ॥२१७॥
[4]यस्या दूतीं प्रियः प्रेष्य दत्त्वा संकेतमेव वा ।
नागतः कारणेनेह विप्रलब्धा तु सा भवेत्[5] ॥२१८॥
[6]नानाकार्याणि सन्धाय यस्या वै प्रोषितः प्रियः ।
सा(प्र?)रूढालककेशान्ता भवेत् प्रोषितभर्तृका ॥२१९॥
हित्वा लज्जां [7]तु या श्लिष्टा मदेन मदनेन च[8] ।
अभिसारयते कान्तं सा भवेदभिसारिका ॥२२०॥

---

स्वाभिलाषा । आमोदगुणो हर्षः सौभाग्याभिमानश्च । व्यासङ्गादित्यन्य-नारीविषयादित्यर्थः । (प्र)रूढाः प्रलम्बीभूता अलकाः, केशान्तश्च कबरीभारः । प्ररूढ एकवेणीभूते यस्याः । अन्ये त्वकृतकर्मतया केशान्ते ललाटे रोम्णामुद्भेद-मुत्प्ररूढं वर्णयन्ति । मदो मद्यकृतः, चकाराद् द्वयं वदन्मदनस्यैव प्राधान्यमाह । अभिसरः सहायः तस्य व्यापारेण प्रियतममतिक्रामति, "तत्करोति तदाचष्टे तेनातिक्रामति धातुरूपं" चेति स्पष्ट (सू-टेः ?) इत्यस्य वृद्धिः । कुप्यन्ती

---

1. KSS., NS. सामोदेगुणसंयुक्ता ।
2. KSS., NS. आमर्षवेषसंतप्ता ।
3. KSS., NS. तदनागमनार्ता तु खण्डितेत्यभिधीयते ।
4. KSS., NS. तस्माद्भूतां प्रियः प्राप्य गत्वा ।
5. KSS., NS. मता ।
6. KSS., NS. गुरुकार्यान्तरवशाद्यस्या विप्रोषितः ।
7. KSS., NS. समाकृष्टा ।
8. KSS., NS. या ।

आस्ववस्थासु विज्ञेया नायिका नाटकाश्रया ।
एतासां [1]चैव वक्ष्यामि कामतन्त्रमनेकधा ॥२२१॥
चिन्तानिःश्वास[2]खेदेन [3]हृद्दाहाभिनयेन च ।
सखीभिः सह संलापै[4]रात्मावस्थावलोकनैः ॥२२२॥
ग्लानिदैन्याश्रुपातैश्च रोषस्यागमनेन च ।
[5]निर्भूषणमृजात्वेन दुःखेन रुदितेन च ॥२२३॥
खण्डिता विप्रलब्धा वा कलहान्तरितापि वा ।
तथा प्रोषितकान्ता च [6]भावानेतान् प्रयोजयेत् ॥२२४॥
विचित्रोज्ज्वलवेषा तु प्रमोदोद्द्योतिताननां ।
उदीर्णशोभा च तथा कार्या स्वाधीनभर्तृका ॥२२५॥

---

प्रशान्तेत्यादयस्तु नायिकाभेदे नेहोक्ताः, तेषां वासकाभावनिवृत्तत्वाभावात् । नाटकाश्रया इति नाट्यविषया इत्यर्थः ।

तत्र विप्रलम्भजीवितं शृङ्गारेण वासकाभावभावितनायिकाभेदाश्रयं प्रथमं दर्शयति चिन्तानिःश्वासखेदेनेत्यादिना । सामान्याभूते सकलहृदयसंवादिनि मदनोपचारे चायमभिनय इत्यपि सामान्याभिनयः । भावानेतानिति पठितानुभावव्यभिचारिसमुचिता ये भावा व्यभिचारिस्थायिरूपा(णामि)हापठितमप्यनुभावजातं प्रदर्शयति यावत् । वासकसज्जा अभिसारिका च स्वावसरे स्वाधीनभर्तृकयैव तुल्य इति पृथङ् नोक्ते ।

---

1. KSS., NS. ये च ।
2. KSS., NS. खेदैश्च ।
3. KSS., NS. हृदया ।
4. KSS., NS. संप्रलापैश्च ।
5. KSS., NS. निर्भूषणाङ्गी विमृजा ।
6. KSS., NS. भावैरेवं ।
7. KSS., NS. अतिशया ।

[1]वेश्यायाः कुलजायाश्चप्रेष्यायाश्च प्रयोक्तृभिः ।
एभिर्भावविशेषैस्तु कर्तव्यमभिसारणम् ॥२२६॥
समदा मृदुचेष्टा च तथा परिजनावृता ।
नानाभरणचित्राङ्गी गच्छेद्वेश्याङ्गना शनैः[2] ॥२२७॥
संलीना[3]स्वेषु गात्रेषु त्रस्ता [4]विनमितानना ।
अवकुण्ठनसंवीता गच्छेत्तु कुलजाङ्गना ॥२२८॥
[5]मदस्खलितसंलापा विभ्रमोत्फुल्ललोचना ।
आविद्धगतिसंचारा गच्छेत्प्रेष्या समुद्धतम्[6] ॥२२९॥
[7]गत्वा सा चेद्यदा तत्र पश्येत्सुप्तं प्रियं तदा[8] ।
[9]अनेन तूपचारेण तस्य कुर्यात्प्रबोधनम् ॥२३०॥
अलङ्कारेण कुलजा वेश्या गन्धैस्तु शीतलैः ।
प्रेष्या तु वस्त्रव्यजनैः कुर्वीत प्रतिबोधनम् ॥२३१॥

---

अथाभिसारणस्वरूपमाह—वेश्याया इत्यादि । भावविशेषैरिति वस्तुविशेषैरित्यर्थः । संलापो दूत्या सख्या सहोक्तिप्रत्युक्तिः । (अलङ्कारेणेति) अलङ्कारशब्दो नूपुरादि(वि)शिष्टः (तत्) ।

---

1. KSS., NS. वेश्यानां कुलजायां वा प्रेष्यायां वा ।
2. KSS., NS. स्वेषु गात्रेषु ।
3. KSS., NS. विप्रेक्षित ।
4. KSS., NS. च ।
5. KSS., NS. मदस्त्वभिनयालापा ।
6. KSS., NS. प्रेष्याङ्गनानया ।
7. KSS., NS. स्यादयं शयितो व्यक्तं ।
8. KSS., NS. यदा ।
9. KSS., NS. प्रिया यथोत्थापयति तथा वक्ष्याम्यहं पुनः ।
10. KSS., NS. बोधयेत् स्थायिनं प्रियम् ।

कुलाङ्गनानामेवायं [1]नोक्तः कामाश्रयो विधिः ।
सर्वावस्थानुभाव्यं हि[2] यस्माद्भवति नाटकम् ॥२३२॥
[3]नवकामप्रवृत्ताया क्रुद्धाया वा समागमे ।
[4]सापदेशैरुपायैस्तु वासकं संप्रयोजयेत्[5] ॥२३३॥
[6]नानालङ्कारवस्त्राणि गन्धमाल्यानि चैव हि ।
प्रियायोजितभुक्तानि निषेवेत मुदान्वितः ॥२३४॥

ननु राज्ञां वेश्यादिसंभोगो निह्नवकारापायसङ्कुलत्वात् किमिह्यानेन दर्शितेनेत्याशङ्क्याह—सर्वावस्थानुभाव्यं हि कार्यं नाटकमिति नाट्य इति यावत् । सर्वावस्था अनुभाव्या प्रत्यक्षायमाणत्वं नेया, यत्र प्रकरणादौ वेश्यासंभोगोऽप्यस्तीत्युक्तं दशरूपके (अध्या—१८) यदि तर्हि सर्वतः प्रकारो नाटके प्रदर्श्यस्तदा वासके यदा प्रकटप्रकार उक्तः ।

एवं व्याजप्रकारोऽपि वाच्य इत्याशयेनाह—नवकामप्रवृत्ताया इति । नवे पुरुषसम्भोगे या प्रवृत्ता प्रथमसमागमनीया वेश्या पूनर्भूर्गान्धर्वविवाहविवाह्या कन्या वा तस्याः समागमे चिकीर्षिते, सव्याजैः उपायैः वासको व्याजश्च यथा तथैव प्रकटं नाङ्गीकरोति, नायिकान्तरेभ्यश्च झटिति भीरुर्नायको भवति । अवरुद्धापि खण्डिता कलहान्तरिता वा वासकमनङ्गीकुर्वती व्याजतोऽङ्गीकार्यते । तत्र नायिकाहृदयग्रहणोचितविदग्धतानिमित्तं नायकस्योपचारमाह—नानालङ्कारेत्यादि ।

---

1. KSS., NS. प्रोक्तः ।
2. KSS., NS. भावं तु ।
3. KSS., NS. भयकामप्रणेता ।
4. KSS., NS. सत्यादेशैः ।
5. KSS., NS. सम्प्रकल्पयेत् ।
6. KSS., NS. नानालङ्कारमाल्याभिधूपगन्धाम्बराणि च ।
   नित्यं सुखान्युदात्तानि सेवेत मदनान्वितः ।

न तथा भवति मनुष्यो

मदनवशः कामिनीमलभमानः ।

द्विगुणोपजातहर्षो भवति

यथा सङ्गतः प्रियया ॥२३५॥

विलासभावेङ्गितवाक्यलीला-

[2]माधुर्यविस्तारगुणोपपन्नः ।

परस्परप्रेमनिरीक्षितेन

समागमः कामकृतस्तु कार्यः ॥२३६॥

ततः प्रवृत्ते मदने उपचारसमुद्भवे ।

वासोपचारः कर्तव्यो नायकागमनं प्रति ॥२३७॥

---

ननु प्राप्ता चेत् प्रमदा तर्हि निवृत्तकामः, तत् कोऽयमुपचारप्रतिभर इत्याशङ्क्याह न तथा भवतीति । मदनः कामभवः इति काम एव । मदि हर्षग्लपनयोरिति पठति, तेन समागमे द्विगुणीभवति कामः, ततश्चोपचारे यत्न उचित इत्याह—विलासभावेति । विलासः स्त्रीणां च व्याख्यातः 'स्थानासनगमनाना'मिति, (२२-१५) (स्त्रियाः), 'धीरसंचारिणी दृष्टिः (२२-३५) इति (पुरुषस्य) च । तत्प्रधानभावाः चेष्टितानि । इङ्गितं प्रेमसूचका व्यापाराः व्याख्याताः 'काम्येनाङ्गविकारेणेत्यादि,' 'चकिता भवेत्' इत्यन्तेन (२२-१६७-१७२) ।

वाक्यलीलेति अङ्गासाध्यादिपूक्ता । माधुर्यं "सर्वावस्थाविशेषे"ष्विति

---

1. KSS., NS. विशेषो ।
2. KSS., NS. विशेषमाधुर्यं ।

गन्धमाल्ये[1] गृहीत्वा तु चूर्णवास[2]स्तथैव च ।
[3]आदर्शो लीलया गृह्यश्छन्दतो वा पुनः पुनः ॥२३८॥
वासोपचारे नात्यर्थं भूषणग्रहणं भवेत् ।
रशनानपुरप्रायं स्वनवच्च प्रशस्यते ॥२३९॥
[4]नाम्बरग्रहणं रङ्गे न स्नानं न विलेपनम् ।
नाञ्जनं[5] नाङ्गरागश्च केशसंयमनं तथा ॥२४०॥
[6]नाप्रावृता नैकवस्त्रा न रागमधरस्य तु ।
उत्तमा मध्यमा वापि [7]कुर्वीत प्रमदा क्वचित् ॥२४१॥
अधमानां भवेदेष सर्व एव विधिः सदा ।

---

(२२-२९)नृणां च, "अभ्यासात् करणानां" (२२-३६)इति । एवां विस्तारगुणेन कविवर्णनाकृतेनोपपन्न एतस्मादुपचारत्सम्यगुद्भवो यस्य । चूर्णः पटवासः । वासो वस्त्रम् । नात्यर्थमिति खेदावहत्वात् । रात्रावदृश्यत्वात्तु दरिद्राणां दीपशून्यं वासगृहं दृष्टवतां हेतुत्वेन स्वनवत्त्वं, चेति हेतौ यतः प्रशस्तेन सुरतलीलोपयोगिना शब्देन युक्तम् । नाम्बरग्रहणं रङ्गे इत्यादिना प्रसङ्गतो निषेधमाह । वासोपचारसिद्धये तु रङ्गेऽप्येतदुपचारोपयोगि कर्तव्यमिति हि कोप-

---

1. KSS., NS. माल्यं ।
2. KSS., NS. द्वार ।
3. KSS., NS. स्थापयेन्नायककृते कुर्याच्चात्मप्रसाधनम् ।
4. KSS., NS. नास्वरग्रहणं रङ्गे नानुरङ्गे विलेपनम् ।
5. KSS., NS. नानुरागं च न च केशोपसंग्रहम् ।
6. KSS., NS. नानावृत्तानेकवस्त्रा ।
7. KSS., NS. प्रकुर्यात् ।
8. KSS., NS. एवं विधिः प्रकृतिसंभवः ।

[1]कारणान्तरमासाद्य तस्मादपि न कारयेत् ॥२४२॥
प्रेष्यादीनां च नारीणां नराणां वापि नाटके ।
भूषणग्रहणं कार्यं पुष्पग्रहणमेव च[2] ॥२४३॥
गृहीतमण्डना [3]चापि प्रतीक्षेत प्रियागमम् ।
लीलया [4]मण्डितं वेषं कुर्याद्यन्न विरुध्यते ॥२४४॥
[[5]विधिवद्वासकं कुर्यान्नायिका नायकागमे ।]
[6]प्रतीक्षमाणा च ततो नालिकाशब्दमादिशेत् ॥२४५॥
श्रुत्वा तु नालिकाशब्दं[7] नायकागमविक्लबा ।
[8]विषण्णा वेपमाना च गच्छेत्तोरणमेव च ॥२४६॥

संभावनयेति नाम्बरग्रहणमिति सामान्योक्तावपि प्रकारादुत्तमाया मध्यमायाश्चेति गम्यते । अधमायाश्च भवत्येतद्रङ्गेऽपि । एवं निषेधमधमासु पुनर्विधिमुक्त्वा प्रकृत-मुपचारमेवाभिसन्धत्ते भूषणग्रहणमित्यादि । उक्तपूर्वेऽत्रोपचारे आदरं दर्शयति विधिवद्वासकं कुर्यादिति वासकोचितमुपचारमित्यर्थः ।

ननु समाप्त उपचारे यदि प्रियो नागतः किं कुर्यादित्याह प्रतीक्षमाणेति । नालिकाशब्दमादिशेदिति इयांश्च कालो गतः किमित्यादि न प्राप्तः स्यादिति,

1. KSS., NS. तासामपि ह्यसम्यं यन्न तत्कार्यं प्रयोक्तृभिः । प्रमदा-भिर्नरैर्वापि नानाभावं तु नाटके ।
2. KSS., NS. पुष्पाणां ग्रहणं तथा ।
3. KSS., NS. किंचित् प्रतीच्छेत ।
4. KSS., NS. मण्डनं ।
5. KSS., NS. do not read.
6. KSS., NS. वीक्षमाणा प्रियपश्यं (?) शृणुयान्नाडिकाध्वनिम् ।
7. KSS., NS. नादं ।
8. KSS., NS. वेपन्ती त्रस्तहृदया तोरणाभिमुखी व्रजेत् ।

[1]तोरणं वामहस्तेन कवाटं दक्षिणेन च[2] ।
[3]गृहीत्वा तोरणाश्लिष्टा संप्रतीक्षेत नायकम् ॥२४७॥
[4]शङ्कां चिन्तां भयं चैव प्रकुर्यात्तोरणाश्रिता ।
अदृष्ट्वा रमणं नारी विषण्णा च क्षणं भवेत् ॥२४८॥
दीर्घं चैव विनिःश्वस्य नयनाम्बु निपातयेत् ।
सन्नं च हृदयं कृत्वा विसृजेदङ्गमासने ॥२४९॥
व्याक्षेपाद्विमृशेच्चापि नायकागमनं प्रति ।
तैस्तैर्विचारणोपायैः[5] शुभाशुभसमुत्थितैः ॥२५०॥
गुरुकार्येण मित्रैर्वा मन्त्रिणा[6] राज्यचिन्तया ।
अनुबद्धः प्रियः किं नु वृतो[7] वल्लभयापि वा ॥२५१॥
उत्पातान्निर्दिशेच्चापि शुभाशुभसमुत्थितान् ।
निमित्तै[8]रात्मसंस्थैस्तु स्फुरितैः [9]स्पन्दितैस्तथा ॥२५२॥

---

ततोऽप्यनागतेऽयं विधिरित्याह श्रुत्वा तु नालिकशब्दमिति तैस्तैर्विचारणोपायै-रिति यदुक्तं तत्रोदाहरणम् । अनागतोपायानाह गुरुकार्येणेत्यादि । अनुभाववर्ग--

---

1. KSS., NS. वामेन तोरणं ग्राह्यं ।
2. KSS., NS. तु ।
3. KSS., NS. हस्तेन संमुखीभूय उदीक्षेत प्रियागमम् ।
4. KSS., NS. वेमां शङ्कां भये चैव कुर्यात् तोरणसंस्थितम् ।
5. KSS., NS. विचारणैश्चापि ।
6. KSS , NS. मन्त्रिणां ।
7. KSS., NS. तु धृतो ।
8. KSS., NS. राज्य ।
9. KSS., NS. भेदितैः ।

शोभनेषु तु कार्येषु निमित्तं वामतः स्त्रियाः[1] ।
[2]अनिष्टेऽथ सर्वेषु निमित्तं दक्षिणं भवेत् ॥२५३॥
सव्यं नेत्रं ललाटं [3]च भ्रूनासोष्ठं तथैव च ।
ऊरुबाहुस्तनं चैव स्फुरेद्यदि समागमः ॥२५४॥
[4]एतेषामन्यथाभावे दुर्निमित्तं विनिर्दिशेत् ।
दर्शने दुर्निमित्तस्य मोहं गच्छेत्क्षणं ततः ॥२५५॥
[5]अनागमे नायकस्य कार्यो गण्डाश्रयः करः ।
भूषणे चाप्यवज्ञानं रोदनं च समाचरेत् ॥२५६॥
[6]अथ चेच्छोभनं तत्स्यान्निमित्तं नायकागमे ।
सूच्यो नायिकयासन्नो [7]गन्धाघ्राणेन नायकः ॥२५७॥
दृष्ट्वा चोत्थाय संहृष्टा[8] प्रत्युद्गच्छेद्यथाविधि[9] ।

---

स्त्वसूयाखेदार्थचिन्तादिव्यभिचारिसंभवो यथायोगं योज्यः । उत्पातः सहसाऽशुभसूचको महाभूतपरिस्पन्दः स च परस्थः । स्फुरितं चलनं स्पन्दितमेतदितित्वेते स्वदेहस्थे इति भेदेनोक्ते । नेत्रमित्यादि सव्यं वाममिति मन्तव्यम्

---

1. KSS., NS. प्रियाः ।
2. KSS., NS. दुरुक्तेषु तु कार्येषु ।
3. KSS., NS. भ्रूरधरोष्ठः ।
4. KSS., NS. अतोऽन्यथा स्पन्दमाने दुरितं दक्षिणे भवेत् ।
5. KSS., NS. अप्राप्ते चैव कर्तव्यः प्रिये गण्डार्पितं करः ।
6. KSS., NS. ततश्चेच्छोभनं पश्यत् निमित्तं वै प्रियागमे ।
7. KSS., NS. गत्वा ।
8. KSS., NS. हृष्टाङ्गी ।
9. KSS., NS. हि नायकम् ।

[1]ततः कान्तं निरीक्षेत प्रहर्षोत्फुल्ललोचना ॥२५८॥
सखीस्कन्धार्पितकरा कृत्वा स्थानकमायतम् ।
दर्शयेत् ततः कान्तं सचिह्नं सरसव्रणम् ॥२५९॥
यदि स्यादपराद्धस्तु [2]कृतस्तैस्तैरुपक्रमैः ।
उपालम्भकृतैर्वाक्यै[3]रुपालभ्यस्तु नायकः ॥२६०॥
मानापमानसम्मोहैरवहित्थभयक्रमैः[4] ।
वचनस्य समुत्पत्तिः स्त्रीणामीर्ष्याकृता[5] भवेत् ॥२६१॥
विस्रंभस्नेहरागेषु सन्देहे प्रणये तथा ।
परितोषे च [6]घर्षे च दाक्षिण्याक्षेपविभ्रमे[7] ॥२६२॥
धर्मार्थकामयोगेषु प्रच्छन्नवचनेषु च ।
हास्ये कुतूहले चैव संभ्रमे व्यसने तथा ॥२६३॥

---

तथा बाहू । अन्यथाभाव इति दक्षिणस्फुरणे । प्रत्युद्गच्छेदिति नायिकेति प्रथमया योज्यम् ।

एवमियता वासकसज्जया वागङ्गसत्त्वव्यामिश्रः सामान्याभिनयः प्रियसंप्राप्त्यवधिर्दर्शितः । अथ खण्डितादीनां संदर्श्यते यदि स्यादपराद्धस्त्विवति तैस्तैरिति मानावहित्थवस्त्रभङ्गाभिष्यन्दादिभिः । अन्यथाभाषणे कोपादुचिते तदपवादमाह—विस्रम्भेत्यादि कस्मिंश्चित् कार्ये निरूप्ये विस्रम्भसात्मिका कार्या, शरीरापाटवादि पश्यतो वार्ताप्रश्नादौ स्नेहः, तद्वशाद्योऽनुरागो लक्षितः,

---

1. KSS., NS. do not read it.
2. KSS., NS. ततः ।
3. KSS., NS. अभिमाष्यः स ।
4. KSS., NS. अवहित्थैर्यथाक्रमम् ।
5. KSS., NS. गाथाकृता ।
6. KSS., NS. हर्षे ।
7. KSS., NS. पातेन ।

[1]स्त्रीपुंसयोः क्रोधकृते पृथङ् मिश्रे तथापि वा।
अनाभाष्योऽपि संभाष्यः प्रिय एभिस्तु कारणैः॥
यत्र स्नेहो भवेत्तत्र ह्रीर्ष्या मदनसम्भवा।
चतस्रो योनयस्तस्याः कीर्त्यमाना निबोधत॥१६५॥
वैमनस्यं व्यलीकं च विप्रियं मन्युरेव च।
एतेषां संप्रवक्ष्यामि लक्षणानि यथाक्रमम्॥२६६॥
निद्राखेदालसगतिं सचिह्नं सरसव्रणम्।
एवंविधं प्रियं दृष्ट्वा वैमनस्यं भवेत् स्त्रियाः॥२६७॥
[5]निद्राभ्यसूयितावेक्षणेन रोषप्रकम्पमानाङ्ग्या।

---

कृतापराधः सत्यतो न वेति सन्देहः, प्रणयः प्रार्थना, अपत्याद्यभ्युदयः परितोषः कलास्थित्यादि (कलाशिल्पादि ?) निकृतिपक्षेण स्पर्धा संघर्षः, पक्षस्य सखीजनादेर्यदा कार्यः प्रियेण सम्पाद्यः पश्यति तदा सखीकार्यविवादविषयाद्दाक्षिण्यम्, इन्द्रजालादिकृते विस्मयः, धर्मार्थकामोपयोगिनि व्रतगृहकृत्यकौमुदीहर्षोत्सवादावश्यं कर्तव्ये चाप्रियं प्रति स्मरणाकर्तव्या, तेन वा स्मरणम्, उपालम्भद्वारेण किमयं वदेदिति परीक्षणम्, यथा नायकोऽत्यादरात् किंचित्पृच्छति तत्कुतूहलम्, सर्वो यदा हसति तदा हास्यम्, अग्न्याद्युत्पातः संभ्रमः, वसु (बन्धु ?) वियोगादि व्यसनम्, एतेष्वनाभाषणे सर्वथैव निस्स्नेहता स्यात्। क्रोधकृत इति युगपदित्यर्थः।

अपराद्ध इत्युक्तं तत्रापराधं दर्शयितुमुपक्रमं करोति यत्र स्नेह इति। योनयो हेतवश्चत्वारः—वैमनस्यं, व्यलीकं, विप्रियं, मन्युरिति, तान् क्रमेण

---

1. KSS. NS. हास्योपस्थानसंप्राप्तौ दोषप्रक्षेप निह्नवे।
2. KSS., NS. प्रिययेति।
3. KSS. NS. भयं तत्र यत्रेष्यति च मन्मथः।
4. KSS. NS. समुत्पत्तिः प्रयोगं च निबोधत।
5. KSS., NS. तीव्रासूयितवचनाद्रोषाद्बहुशः प्रकम्पमानोष्ठी।

साध्विति सुष्ठ्विति [1]वचनैः शोभत इत्येवमभिनेयम् ॥२६८॥

बहुधा वार्यमाणोऽपि यस्तस्मिन्नेव दृश्यते ।
[2]संघर्षमत्सरात्तत्र व्यलीकं जायते स्त्रियाः ॥२६९॥

कृत्वोरसि वामकरं दक्षिणहस्तं[3] तथा विधुन्वन्त्या ।
चरणविनिष्ठम्भेन[4] च कार्योऽभिनयो व्यलीके तु ॥२७०॥

जीवन्त्यां त्वयि जीवामि दासोऽहं त्वं च मे प्रिया ।
उक्त्वैवं योऽन्यथा कुर्याद्विप्रियं तत्र जायते[5] ॥२७१॥

दूतीलेखप्रतिवचनभेदनैः क्रोधहसितरुदितैश्च ।
विप्रियकरणेऽभिनयः सशिरः कम्पैश्च कर्तव्यः[6] ॥२७२॥

प्रतिपक्षसकाशात्तु[7] यः सौभाग्यविकत्थनः ।
उपसर्पेत् सचिह्नस्तु मन्युस्तत्रोपजायते[8] ॥२७३॥

वलयपरि[9]वर्तनैरथ सुशिथिलमुत्क्षेपणेन रशनायाः ।

---

लक्षयति निद्राखेदालसगतिमित्यादिना (सुरते) गतया निद्रया । (असूयितेति) यदसूयितेनावेक्षणं तेन । (बहुधेति) यतो नायिकातो वार्यते तस्यामेव दृश्यत इति सम्बन्धः । (संघर्षेति) सम्यक् कृतोः घर्षः संघर्षः । (उक्त्वैवमित्यादि

---

1. KSS. NS. वाक्यैः शोभनमित्यभिनयं युज्यात् ।
2. KSS. NS. संहर्षात्तत्र मात्सर्याद्व्यलीकं तु भवेत् स्त्रियाः ।
3. KSS., NS. रुषा विधुन्वाना ।
4. KSS. NS. विनिक्षेपेण च तस्मिन् कुर्वीत साभिनयम् ।
5. KSS., NS. तद्विप्रियमिति स्त्रियाः ।
6. KSS. NS. कम्पः प्रयोक्तव्यः ।
7. KSS., NS. विकाशात्तु ।
8. KSS. NS. चिह्नस्य पत्युस्तत्र भवेत् स्त्रियाः ।
9. KSS., NS. वर्तनेन च सशिथिल···रसनयोः ।

[1]मन्युस्त्वभिनेतव्यः सशङ्कितं [2]बाष्पपूर्णाक्ष्या ॥२७४॥

दृष्ट्वा स्थितं प्रियतमं

[3]सशङ्कितं सापराधमतिलज्जम् ।

ईर्ष्यावचनसमुत्थैः

खेदयितव्यो ह्युपालम्भैः ॥२७५॥

न च निष्ठुरमभिभाष्यो

न चाप्यतिक्रोधनस्तु परिहासः[4] ।

बाष्पो[5]न्मिश्रैर्वचनै-

रात्मोपन्यासससंयुक्तैः ॥२७६॥

मध्याङ्गुल्यङ्गुष्ठाग्रविच्यवात्पाणिनोरसि कृतेन[6] ।

उद्वर्तितनेत्रतया[7] प्रतीतैरभिवीक्षणैश्चापि ॥२७७॥

कटिहस्तविवर्तनया[8] विच्छिन्नतया तथाञ्जलैः[9] करणात् ।

---

प्रतिज्ञातस्यापरिपालनं विप्रियम् । दूतलेखादिमुखेन यानि प्रसादनार्थं प्रतिवचनानि तेषां भेदः दूषणमनङ्गीकरणम् । (वलयेत्यादि) मन्युना तत्क्षण एव तनुत्वं गात्रे भवतीति वलयानां परिवर्तनं, त्रासो रशनायाश्चोत्क्षेप इति ।

केचित्सहृदयास्त्वाहुः—मन्युना सखीजनमध्य एवास्यावहुमानलक्षणा सवत्यप्रतिपत्तिरिति तत्कृतानि च वलयस्य परिवर्तनं योज(लोच ?)नभ्रमणादिकं,

---

1. KSS., NS. मधुस्य ।
2. KSS., NS. चास्य मोक्षेऽस्य ।
3. KSS., NS. साशङ्कं ।
4. KSS., NS. परिहारैः ।
5. KSS., NS. निम्नैः ।
6. KSS., NS. उरःस्थेन ।
7. KSS., NS. भावैरभिवीक्षणैः ।
8. KSS., NS. निविष्टस्य ।
9. KSS., NS. अङ्गुलैः ।

मूर्धभ्रमण[1]निहञ्चितनिपातसंश्लेषणाच्चापि ॥२७८॥
अवहित्थवीक्षणाद्वा[2] अङ्गुलिभङ्गेन तर्जनैर्ललितैः ।
एभिर्भावविशेषैर[3]नुनयनेष्वभिनयः कार्यः ॥२७९॥

[4]शोभसे साधु दृष्टोऽसि गच्छ त्वं किं विलम्बसे ।
मा स्प्राक्षीः [5]प्रिया तत्र या ते हृदि स्थिता ॥२८०॥

गच्छेत्युक्त्वा परावृत्य [6]विनिवृत्तान्तरेण तु ।
केनचिद्वचनार्थेन[7] प्रहर्षं योजयेत्पुनः ॥२८१॥

रभसग्रहणाच्चापि हस्ते वस्त्रे च मूर्धनि ।
कार्यं [8]प्रसादनं नार्यां ह्यपराधं समीक्ष्य तु ॥२८२॥

हस्ते वस्त्रेऽथ केशान्ते नार्याप्यथ गृहीतया ।
कान्तमेवोपसर्पन्त्या कर्तव्यं मोक्षणं शनैः ॥२८३॥

---

रशनोत्क्षेपणं यन्त्रोत्क्षेपणं चेति । मध्याङ्गुल्यङ्गुष्ठाग्रविच्यवादिति तत्स्थं मूलं व्यापारं स्मारयति । (कटीति) कटीपार्श्वगतस्य हस्तस्य विवर्तमानाया अञ्जलेर्हस्तस्य पताकाभ्यां तु संश्लेषादित्यस्य विश्लेषणम्, अवहित्थेन गाम्भीर्येण यद्वीक्षणं, तेन चायतं स्थानकमाक्षिप्तम् । तत्र हि तस्य विनियोग उक्तः (१२: १६४) । निरपेक्षभावता संभवतीत्याह गच्छेत्युक्त्वेति । विनिवृत्तिप्रधान्यः

---

1. KSS., NS. निकुञ्चितनखादिसन्दर्शन्नाञ्चापि ।
2. KSS., NS. वीक्षणेन सा ।
3. KSS., NS. अस्याभिनयः प्रयोक्तव्यः ।
4. KSS. शोभने ।
5. KSS., NS. प्रियां या हि तव या हृदि संस्थिता ।
6. KSS., NS. विनिवृत्तोत्तरेण ।
7. KSS., NS. व्यसनार्थेन ।
8. KSS., NS. प्रणमनं ।

गृहीतयाथ केशान्ते हस्ते वस्त्रेऽथवा पुनः ।
[1]हुं मुञ्चेत्युपसर्पन्त्या वाच्यः स्पर्शालसं प्रियः ॥२८४॥

पादाग्रस्थितया नार्या [2]किंचित्कुट्टमितोत्कटम् ।
अवक्रान्तेन कर्तव्यं केशानां मोक्षणं शनैः ॥२८५॥

[3]अमुच्यमाने केशान्ते [4]संजातस्वेदलेशया ।
हं हु मुञ्चापसर्पेति वाच्यः[5] स्पर्शालसाङ्गया ॥२८६॥

गच्छेति रोषवाक्येन गत्वा[6] प्रतिनिवृत्य च ।
केनचिद्वचनार्थेन [7]वाच्यं यास्यसि नेति च ॥२८७॥

[8]विधूननेन हस्तेन[9] हुंकारं [10]संप्रयोजयेत् ।
स चावधूनने कार्यः [11]शपथैर्व्याज[12] एव च ॥२८८॥

---

मुत्तरं येनासौ विलम्बते । अपराधमिति, अल्पेऽपराधे मूर्धनि मध्ये हस्ततले भूषितवस्त्रे । व्याज इति व्रतोपदासोऽद्य मया प्रस्तुत इत्यादि ।

---

1. KSS., NS. यथा प्रियो न पश्येद्धि स्पर्शो ग्राह्यस्तथा स्त्रिया ।
2. KSS., NS. तथैवाकुञ्चिताङ्गया ।
3. NS. विमुच्य ।
4. KSS. नार्या सस्वेद ।
5. NS. वासः ।
6. KSS. प्रतिनिवर्त्य NS. अत्र विनिवृत्य ।
7. KSS. चालापं योजयेत् पुमान् NS. स्वालापं सम्प्रयोजयेत् ।
8. KSS. विधूनश्च ।
9. KSS., NS. हस्तस्य ।
10. KSS. स्त्री प्रयोजयेत् ।
11. NS. शपथे ।
12. KSS. वाच्य ।

अक्ष्णोः संवरणे[1] कार्यं [2]पृष्ठतश्चोपगूहनम् ।
नार्यास्त्वपहृते वस्त्रे [3]दीपाच्छादनमेव च ।।२८९।।
[4]तावत् खेदयितव्यस्तु यावत्पादगतो[5] भवेत् ।
ततश्चरणयोर्याते[6] कुर्याद्द्‌तीनिरीक्षणम् ।।२९०।।
[7]उत्थाप्यालिङ्गयेच्चैव नायिका नायकं ततः ।
[8]रतिभोगगता हृष्टा शयनाभिमुखी व्रजेत्[9] ।।२९१।।
एतद्गीतविधानेन सुकुमारेण योजयेत् ।
यदा शृङ्गारसंयुक्तं [10]रतिसंभोगकारणम् ।।२९२।।
यदा चाकाशपुरुष[11] परस्थवचनाश्रयम्[12] ।
[13]भवेत्काव्यं तदा ह्येष कर्तव्योऽभिनयः स्त्रिया ।।२९३।।

---

ननु वस्त्रापहारशयनादि रङ्गे निषिद्धमिति (किं) तेनोक्तेन, सत्यं लास्यदाने (स्थाने ?) तु तस्योपयोगः । इह तु कामोपचारप्रसङ्गादित्युक्तं, तदाह एतद्गीतविधानेनेति, न च नाट्येऽस्य सर्वात्मनानुपयोगः तथाहि यथा भाणकादौ । आकाशपुरुष इति (प्रविष्टपात्रेग) भावितः प्रधानोऽप्रविष्टः पुरुषो भवति तदा इदमिदं मया दृश्यत इति ब्रूयात् । एवं परस्थं वा यदा व्याख्यायते न च प्रत्यक्षत्वेनैतदुपयुज्यत इति दर्शयति यदन्तः पुरसंबन्धमिति ।

1. KSS., NS. संवरणं ।
2. NS. मृष्टतल्प ।
3. KSS. नीवी ।
4. NS. तादृशे दयितव्येस्तु ।
5. KSS. हृतो ।
6. KSS., NS. पाते ।
7. KSS. तथाप्यालिङ्गयेदेनं NS. स्पर्शस्य ग्रहणं कृत्वा ।
8. NS. उत्थाप्य विधिना हृष्टा । KSS. रतिभोगहृता मृष्टा ।
9. NS. भवेत् ।
10. KSS. संयुक्तो रतिसंयोग ।
11. KSS. काशपरुषं ।
12. NS. आशयम् ।
13. NS. नमेत्काव्ये । KSS. भवेत् कार्यं ।

यदन्तः पुरसंबन्धं [1]काव्यं भवति नाटके ।
शृङ्गाररससंयुक्तं [2]तत्राप्येष विधिर्भवेत् ।।२९४।।
न कार्यं शयनं रङ्गे नाट्यधर्मं विजानता ।
केनचिद्वचनार्थेन [3]अङ्कच्छेदो विधीयते ।।२९४।।
[4]यद्वा शयीतार्थवशादेकाकी सहितोऽपि वा ।
[5]चुम्बनालिङ्गनं चैव तथा गुह्यं च यद्भवेत् ।।२९६।।
दन्तच्छेद्यं नखच्छेद्यं नीवीसंस्रनमेव च ।
[6]स्तनान्तरविमर्दं च रङ्गमध्ये न कारयेत् ।।२९७।।
भोजनं सलिलक्रीडा तथा लज्जाकरं च यत् ।
एवंविधं भवेद्यद्यत्तत्तद्रङ्गे न कारयेत् ।।२९८।।
[7]पितापुत्रस्नुषाश्वश्रूदृश्यं यस्मात्तु नाटकम् ।
तस्मादेतानि सर्वाणि वर्जनीयानि यत्नतः ।।२९९।।
वाक्यैः सातिशयैः [8]श्रव्यैर्मधुरैर्नातिनिष्ठुरैः ।
हितोपदेशसंयुक्तै[9]स्तज्ज्ञः[10]कुर्यात्तु नाटकम् ।।३००।।

---

नन्वेवं सर्वमत्र प्राप्तमिति ननूत्पलचेटादौ दृश्यते शयनमित्याशङ्क्याह— यद्वाशयीतेति नात्र शयननिषेधस्तात्पर्यम्, अपि तु चुम्बनादिनिषेध इति भावः। पितापुत्रेत्यादि। ततश्च रसो भज्येत, स हि साधारणान्योन्यानुप्रवेशप्राण इति प्रत्यर्पि (प्रतिपदं ?) वदामः। एतत्सामान्याभिनयमध्ये वाचिकोऽप्यभिनयो-

1. KSS. कार्यं ।
2. NS. तदा ।
3. NS. छेदमत्र प्रयोजयेत् ।
4. KSS. NS. यदा स्वपेदर्थवशात् ।
5. NS. चुम्बनालिङ्गनादीनि रङ्गमध्ये न कारयेत् ।
6. KSS., NS. स्तनाधर ।
7. KSS., NS. पितृ ।
8. NS. हृद्यैः ।
9. KSS. जननैः ।
10. NS. प्राज्ञः कुर्वीत तज्ज्ञैः कार्यं तु ।

[1][एवमन्तःपुरकृतः[2] कार्यस्त्वभिनयो बुधैः] ।
समागमेऽथ नारीणां वाच्यानि मदनाश्रये ॥३०१॥
प्रियेषु वचनानीह यानि तानि निबोधत ।
प्रियः कान्तो विनीतश्च नाथः स्वाम्यथ जीवितम् ॥३०२॥
नन्दनश्चेत्यभिप्रीते वचनानि भवन्ति हि ।
दुःशीलोऽथ दुराचारः शठो वामो विकत्थनः ॥३०३॥
निर्लज्जो निष्ठुरश्चैव [3]प्रियः क्रोधेऽभिधीयते ।
यो विप्रियं न कुरुते न चायुक्तं प्रभाषते ॥३०४॥
तथार्जवसमाचारः [4]स प्रियस्त्वभिधीयते ।
अन्यनारीसमुद्भूतं चिह्नं [5]यस्य न दृश्यते ॥३०५॥
अधरे वा शरीरे वा स कान्त इति भाष्यते[6] ।
संक्रुद्धेऽपि हि यो नार्या नोत्तरं प्रतिपद्यते ॥३०६॥
परुषं वा न वदति विनीतः सोऽभिधीयते ।
हितैषी रक्षणे शक्तो न मानी न च मत्सरी ॥३०७॥
सर्वकार्येष्वसंमूढः [8]स नाथ इति संज्ञितः ।
सामदानार्थसंभोगैस्तथा लालनपालनैः ॥३०८॥
नारीं [9]निषेवते यस्तु स स्वामीत्यभिधीयते ।

---

ऽस्तीत्याशयेनाह प्रियेषु वचनानीति ।

---

1. KSS. does not read.
2. KSS., KS. पुरगतः ।
3. NS. प्रियं क्रोधेऽभिनिर्दिशेत् KSS. प्रायः क्रोधेऽभिधीयते ।
4. KSS. प्रिय इत्युच्यते बुधैः NS. प्रिय इति ।
5. NS. यत्र प्रदृश्यते ।
6. KSS. भण्यते ।
7. KSS. नोत्तरोत्तरभाषणम् ।
8. KSS. यः स स्वामीति कीर्तितः ।
9. KSS. संभजते स नाथ इति संज्ञितः ।

नारीप्सितै[1]रभिप्रायैर्निपुणं शयनक्रियाम् ॥३०९॥
करोति यस्तु संभोगे [2]स जीवितमिति स्मृतः ।
कुलीनो [3]धृतिमान्दक्षो दक्षिणो वाग्विशारदः ॥३१०॥
श्लाघनीयः सखीमध्ये नन्दनः [4]सोऽभिधीयते ।
एते वचनविन्यासा रति[5]प्रीतिकराः स्मृताः ॥३११॥
तथा चाप्रीतिवाक्यानि गदतो मे निबोधत ।
निष्ठुरश्चासहिष्णुश्च मानी धृष्टो विकत्थनः ॥३१२॥
[6]अनवस्थितचित्तश्च दुःशील इति स स्मृतः[7] ।
ताडनं बन्धनं चापि यो विमृश्य समाचरेत् ॥३१३॥
तथा परुषवाक्यश्च दुराचारः स तन्यते[8] ।
वाचैव मधुरो यस्तु कर्मणा नोपपादकः[9] ॥३१४॥
[10]योषितः किञ्चिदप्यर्थं स शठः परिभाष्यते[11] ।
वार्यते यत्र यत्रार्थे [12]तत्तदेव करोति यः ॥३१५॥
[13]विपरीतनिवेशी च स वाम इति संज्ञितः ।

---

नारीप्सितैरिति न तु स्वोचितैरिति यावत् । (रतिप्रीतीति) रतौ सत्यां

---

1. NS. स्थितैः ।
2. KSS., जीवितः सोऽभिसंज्ञितः ।
3. KSS. नीतिमान् ।
4. KSS. नाम संज्ञितः ।
5. KSS. स्मृति ।
6. KSS. उत्तरोत्तरमानी ।
7. NS. कथ्यते ।
8. KSS. संज्ञितः ।
9. KSS., NS. नोपपादयेत् ।
10. NS. योषितां KSS. योषितं ।
11. KSS., NS. परिकीर्तितः ।
12. KSS. NS. तं तमेव ।
13. KSS., भवेदभिनिवेशी । NS. विपरीतनिषेवी ।

सरसव्रणचिह्नो यः स्त्रीसौभाग्यविकत्थनः ॥३१६॥
अतिमानी तथा स्तब्धो [1]विकत्थन इति स्मृतः ।
वार्यमाणो दृढतरं यो नारी[2]मुपसर्पति ॥३१७॥
सन्निह्नः सापराधश्च स [3]निर्लज्ज इति स्मृतः ।
[4]योऽपराद्धस्तु सहसा नारीं सेवितुमिच्छति ॥३१८॥
अप्रसादनबुद्धिश्च निष्ठुरः सोऽभिधीयते ।
एते वचनविन्यासाः प्रियाप्रियविभाषिताः[5] ॥३१९॥
[6]नर्तकीसंश्रिताः कार्या बहवोऽन्येऽपि नाटके ।
एष गीतविधाने तु सुकुमारे विधि[7]र्भवेत् ॥३२०॥
[8]शृङ्गाररससंभूतो रतिसंभोगखेदनः ।
यच्चैवाकाशपुरुषं परस्थवचनाश्रयम् ॥३२१॥
शृङ्गार [9]एवं वाच्यं स्यात्तत्राप्येष क्रमो[10]भवेत् ।
यद्वा पुरुषसंबन्धं कार्यं भवति नाटके ॥३२२॥
शृङ्गाररससंयुक्तं तत्राप्येष क्रमो भवेत् ।

---

या प्रीतिः परितोषः, रतौ क्रोधोऽपि हि भवति परितोषश्च सुतादावुभयमप्युपात्तम् सहसेत्यप्रसाद्य । अन्येऽपीति उदाहरणमेतदित्यर्थः ।

पूर्वोक्तमेवोपसंहरति एष गीतविधान इति शृङ्गारे रसे आकाशपुरुषादौ ।

---

1. KSS., NS. स विरूप ।
2. KSS., अभिसर्पति ।
3. KSS. NS· विलज्ज इति संज्ञितः ।
4, KSS., NS. सापराधस्तु ।
5. KSS. विभूषिता ।
6. KSS. नानावस्थां समासाद्य विपरीतां समाचरेत् ।
7. KSS. मारो विधिः ।
8. KSS. शृङ्गाररसवाच्यः स्यात्तत्राप्येष विधिर्भवेत् ।
9. KSS. रस ।
10. KSS. विधिः ।

एवमन्तःपुरगतः प्रयोज्योऽभिनयो भवेत् ॥३२३॥
दिव्याङ्गनानां तु विधिं व्याख्यास्याम्यनुपूर्वशः ।
नित्यमेवोज्ज्वलो वेषो नित्यं प्रमुदितं मनः ॥३२४॥
[1]नित्यमेव सुखः कालो [2]देवानां ललिताश्रयः ।
[3]न चेर्ष्या नैव च क्रोधो नासूया न प्रसादनम्[4] ॥३२५॥
[5]दिव्यानां दृश्यते पुंसां शृङ्गारे योषितां तथा[6] ।
ये भावा मानुषाणां स्युर्यदङ्गं यच्च चेष्टितम् ॥३२६॥
[7]सर्वं तदेव कर्तव्यं दिव्यैर्मानुषसङ्गमे ।
[यदा मानुषसंभोगो [8]दिव्यानां योषिता भवेत् ॥३२७॥
[9]तदा सर्वाः प्रकर्तव्या [10]ये भावा मानुषाश्रयाः]
[11]शापभ्रंशात्तु दिव्यानां तथा चापत्यलिप्सया[12] ॥३२८॥
[13]कार्यो मानुषसंयोगः शृङ्गाररससंश्रयः[14] ।

---

एवमिति प्रीत्या कोपेन वा, यदा वाच्यवचनं स्यात् तत्राप्येष एव वचन क्रमः । पुरुषसंवन्धमिति प्रत्यक्षपुरुषयुक्तमित्यर्थः । दिव्यवेश्याङ्गनाभिस्तु राज्ञां भवति संभोग इति तत्र सामान्याभिनयमाह नित्यमेवेत्यादि । अत्र श्लोकद्वये यद्यपीत्यध्याहारेण ये भावा इत्यत्र च तथापीत्यध्याहारेण सङ्गतिः कार्या ।

---

1. NS. सुखकालः सदा नित्यं ।
2. KSS., NS. देवीनां ।
3. NS. ईर्ष्या लिप्सा न च क्रोधो ।
4. NS. प्रसाधनम् ।
5. KSS., NS. दृश्यते दिव्यपुंसां हि ।
6. KSS., NS. प्रति ।
7. तत्सर्वं मानुषीं प्राप्य कार्यं दिव्यैरपि द्विजाः ।
8. KSS., NS. संयोगो ।
9. NS. सर्व एव तदा कार्याः ।
10. NS. भावा मानुषसंश्रयाः ।
11. KSS. शापाद् भ्रंशस्तु ।
12. KSS., NS. अङ्गनानां यदा भवेत् ।
13. NS. मानुषैः सहसंयोगः ।
14. KSS. तथाचैवोपसर्पणम् ।

पुष्पैर्भूषणजैः शब्दैरदृश्यापि प्रलोभयेत् ।।३२९।।
पुनः संदर्शनं दत्त्वा क्षणादन्तरिता[1] भवेत् ।
[2]वस्त्राभरणमाल्याद्यैर्लेखसंप्रेषणैरपि ।।३३०।।
ईदृशैरुपचारैस्तु[3] [4]समुन्माद्यस्तु नायकः ।
उन्मादनात्समुद्भूतः [5]कामो रतिकरो भवेत् ।।३३१।।
स्वभावोपगतो यस्तु नासावत्यर्थभाविकः[6] ।
एवं राजोपचारो हि कर्तव्योऽभ्यन्तराश्रयः ।।३३२।।
बाह्यमप्युपचारं तु [7]प्रवक्ष्याम्यथ वैशिके ।

इति भरतीये नाट्यशास्त्रे सामान्याभिनयो
नामाध्यायो द्वाविंशः[8] ।

---

विप्रलम्भो हि जीवितेऽभिमान इति भावः । समुन्माद्य इत्यत्र हेतुमाह उन्मादनादिति एतच्च विक्रमोर्वश्यां स्फुटमेव दृश्यतां इति शिवम् ।

सामान्याभिनयः सोऽयं ग्रन्थिस्थानेषु सङ्गतः ।
कृतोऽभिनवगुप्तेन शिवस्मरणशालिना ।।

इति महानाहेश्वराभिनवगुप्तविरचितायां
नाट्यवेदवृत्तावभिनवभारत्यां
सामान्याभिनयो द्वाविंशः ।

---

1. KSS. अदृश्यात्रापि या भवेत् ।
2. KSS., NS. अन्तर्हिता ।
3. KSS,, NS. अभ्युपगमैः ।
4. KSS., NS. समुन्मादस्तु नाटके ।
5. KSS., KSS. समुत्पन्नः ।
6. KSS., NS, भावकः ।
7. KSS., NS. व्याख्यास्याम्यथ ।
8. KSS. चतुर्विंशोऽध्यायः ।

श्रीः

# नाट्यशास्त्रम्

## त्रयोविंशोऽध्यायः[1]

— ० —

विशेषयेत्कलाः सर्वा यस्मात्तस्मात्तु वैशिकः ।
वेशोपचारे साधुर्वा वैशिकः परिकीर्तितः ॥१॥
यो हि सर्वकलोपेतः सर्वशिल्पविचक्षणः ।
स्त्रीचित्तग्रहणाभिज्ञो वैशिकः स भवेत्पुमान् ॥२॥

---

अभिनवभारती—त्रयोविंशोऽध्यायः

पुंसामशक्तापि तदेकभावमादर्शयन्ती बहुभावपूर्णा ।
वेश्यामतिर्निर्वृतिधाम यत्स्था तस्मै नमस्तात्परमेश्वराय ॥

सामान्याभिनयशेष एव वैशिक इत्युपसंहृतं वृत्तपूर्वेऽध्याये—बाह्य-मप्युपचारं तु प्रवक्ष्याम्यथ वैशिके—इति, वैशिको वक्तव्य इति सङ्गतिः । तदुपक्रममाणो···'माद्येन तावन्निरुक्तमाह—विशेषयेदिति । विशेषणं जानाति; तेनातिकामयतीति च धात्वर्थो लक्षणमिति हि तद्विदो वैशेषिका (वैशिका ?): । (वैशिकः) वेश्याकामुकः, स च सर्वान् कामान् विशेष-यत्यतिवैदग्ध्यात् । अथ व्याकरणोचितमस्य निर्वचनमाह वेश्योपचारे साधु-र्वेति । वेशो वेश्या उपचारस्तत्रभव इत्यर्थः । भवार्थमेव विभजति साधुरित्य-नेन । तस्मादसौ कलासु विशेषज्ञ इत्याह यो हि सर्वकलोपेत इति ।

---

1. KSS.. पञ्चविंशः ।
2. NS. वेश्योपचरणाद्वापि KSS. वेशोपचारतो वापि ।
3. KSS., NS. ग्राहकश्चैव ।

गुणास्तस्य तु विज्ञेयाः स्वशरीरसमुत्थिताः[1] ।
आहार्याः सहजाश्चैव त्रयस्त्रिंशत्समासतः ॥३॥
शास्त्रविच्छिल्पसम्पन्नो रूपवान् प्रियदर्शनः ।
विक्रान्तो धृतिमांश्चैव वयोवेषकुलान्वितः ॥४॥
सुरभिर्मधुरस्त्यागी सहिष्णुरविकत्थनः ।
[2]अशङ्कितः प्रियाभाषी चतुरः शुभदः [3]शुचिः ॥५॥
कामोपचारकुशलो दक्षिणो देशकालवित् ।
[4]अदीनवाक्यः स्मितवान् वाग्मी दक्षः प्रियंवदः ॥६॥
[5]स्त्रीलुब्धः संविभागी च श्रद्धधानो दृढस्मृतिः[6] ।
गम्यासु चाप्यविस्रम्भी मानी चेति [7]हि वैशिकः ॥७॥
[8]अनुयुक्तः शुचिर्दक्षो[9] दक्षिणः प्रतिपत्तिमान् ।
भवेच्चि[10]त्राभिधायी च [11]वयस्यस्तस्य तद्गुणः ॥८॥
[12]विज्ञानगुणसम्पन्ना कथिनी लिङ्गिनी तथा ।

---

आहार्याः शास्त्रज्ञतादयः । सहजा रूपलावण्यादयः । गम्यासु चाप्यविस्रम्भीति सहसैव नाभियुक्तः, अपि तु स्फुटभावमन्वेष्यति । भवेत् चित्राभिधायीति वक्रोक्तिकुशलः । तस्येति वैशिकस्य । कथिनी बृहत्कथादिलम्भ(न)कथनाकर्णनकुशला । लिङ्गिनी चित्रकरी । प्रातिवेश्या

---

1. KSS., NS. समुद्भवाः ।
2. KSS., NS. आशंकितः ।
3. KSS., NS. सुभगः ।
4. NS. अदीन ।
5. KSS., NS. अलुब्धः ।
6. KSS., NS. व्रतः ।
7. KSS., NS. स ।
8. KSS., NS. अनुरक्तः ।
9. KSS., NS. दान्तः ।
10. KSS., NS. छिद्राभिज्ञायी ।
11. KSS., NS. वयस्यास्तस्य षड्गुणाः ।
12. NS. does not read.

[1]प्रातिवेश्या सखी दासी कुमारी कारुशिल्पिनी[2] ॥९॥
धात्री पाषण्डिनी चैव तथा रङ्गोपजीविनी[3]।
प्रोत्साहनेऽथ[4]कुशला मधुरकथा दक्षिणाथ[5]कालज्ञा ॥१०॥
लडह्वा संवृतमन्त्रा दूती त्वेभिर्गुणैः कार्या।
तथाप्युत्साहनं[6] कार्यं [7]नानादर्शितकारणम् ॥११॥
यथोक्तकथनं चैव तथा भावप्रदर्शनम्।
[8]न जडं रूपसम्पन्नं नार्थवन्तं न चातुरम् ॥१२॥

---

निकटावसथस्था। पाषण्डिनी व्रतिनी। रङ्गोपजीविनी रजकस्त्री चारणस्त्री। प्रोत्साहने कुशलेत्यादीनि सर्वासां विशेषणानि। उतः सह प्रोत्साहः प्रोत्साहनमिति द्वौ णिचौ। प्रोत्साहयति नायिका तु नायकस्तया प्रोत्साहयति संमुखीकारयतीत्यर्थः।

तस्या व्यापारान्तरमाह—यथोक्तेति संमुखीकरणं सन्देशार्पणं काम्याय भावपरीक्षणं चेति द्वितयमनया कार्यमित्यर्थः। जडः करणीयं न शक्नोति कर्तुं प्रत्युत्पन्नमतिसाध्यानि कृत्यानीत्याह। रूपेणार्थेन वा युक्तः स्वार्थतामाहरेत्। आतुरो हि दृश्यमान एव जुगुप्सां जनयति, स च रतेर्निरपेक्ष इत्यातुरो न कामदूतः। नानादर्शितकारणं कृत्वा प्रोत्साहनमित्युक्तं तानि

---

1. KSS., NS. प्रतिवेश्या।
2. KSS., NS. दारुशिल्पिका।
3. KSS., NS. दूत्यस्त्वीक्षणिकास्तथा।
4. KSS., NS. प्रोत्साहनेषु।
5. KSS., NS. च।
6. KSS., NS. प्रोत्साहनं।
7. KSS., NS. नानादर्शनं।
8. KSS., NS. do not read it.

दूतं[1] वाप्यथवा दूतीं बुधः कुर्यात्कदाचन ।
कुलभोगधनाधिक्यैः कृत्वाऽधिकविकत्थनम्[1] ॥१३॥
दूती निवेदये[3]त्काममर्थाश्चैवानुवर्णयेत्[4] ।
[5]न चाकामप्रवृत्तायाः क्रुद्धाया [6]वापि सङ्गमः ॥१४॥
[7]नानुपायः प्रकर्तव्यो दूत्या हि पुरुषाश्रयः ।
उत्सवे रात्रिसञ्चार उद्याने [8]मित्रवेश्मनि ॥१५॥
[9]धात्रीगृहेषु सख्या वा तथा चैव निमन्त्रणे ।
व्याधितव्यपदेशेन शून्यागारनिवेशने[10] ॥१६॥
[11]कार्यः समागमो नृणां स्त्रीभिः प्रथमसङ्गमे ।
एवं समागमं कृत्वा [12]सोपायं विधिपूर्वकम् ॥१७॥
[[13]अनुरक्तां विरक्तां वा लिङ्गाकारैस्तु लक्षयेत् ।]

---

कारणान्याह कुलभोगेत्यादि उत्सव इति स्वगृह एव रात्रिचारप्रधानो य उत्सवः । प्रथमसङ्गम इति गान्धर्वविवाहे वेश्यापुनर्भूसङ्गमे चेत्यर्थः ।

---

1. KSS., NS. वापि हि दूतीं वा ।
2. KSS., NS. आधिक्यं कार्यं चैव विकत्थनम् ।
3. NS. निवेदनं ।
4. KSS., NS. कार्यमर्थानां चैव भाषणम् ।
5. KSS. नवकाम ।
6. KSS. वा समागमः ।
7. KSS., NS. नानोपायैः ।
8. KSS., NS. ज्ञाति ।
9. KSS., NS. धातृगृहे सखीगेहे ।
10. KSS., NS. समाश्रये ।
11. KSS., NS. एवं समागमः कार्यो नृणाम् ।
12. KSS., NS. नानोपायविधानजम् ।
13. NS. does not read.
KSS. अनुरक्तां विरक्तां वा चिह्नैः समुपलक्षयेत् ।

स्वभावभावातिशयैर्नारी या मदनाश्रया[1] ॥१८॥
करोति निभृता[2] लीलां नित्यं[3] सा मदनातुरा।
[4]सखीमध्ये गुणान् ब्रूते स्वधनं च प्रयच्छति[5] ॥१९॥
[6]पूजयत्यस्य मित्राणि द्वेष्टि शत्रुजनं सदा[7]।
[8]समागमे सखीनां या हृष्टा भवति चाधिकम् ॥२०॥
[9]तुष्यत्यस्य कथाभिस्तु सस्नेहं च निरीक्षते।
सुप्ते तु पश्चात् [10]स्वपिति चुम्बिता प्रतिचुम्बति ॥२१॥
[11]उत्तिष्ठत्यपि पूर्वं च तथा क्लेशसहापि च।
उत्सवे मुदिता या च व्यसने या च दुःखिता ॥२२॥
एवंविधैर्गुणैर्युक्ता त्वनुरक्ता तु सा स्मृता[12]।
विरक्तायास्तु [13]चिह्नानि चुम्बिता नाभिचुम्बति ॥२३॥

---

(स्वभावेति) स्वभावे भावे सुरते येऽतिशया नखरदनसहिष्णुतादयस्तै-रूपलक्षिता अनुरक्तेति संबन्धः। मित्राणि शत्रुजनमिति नायकस्येति शेषः पश्चात्संवेशनं पूर्वमभ्युत्थानं च। तेन विना किमत्र सुखमिति दर्शयति उत्सवे

1. KSS., NS. या नारी मदनार्दिता।
2. KSS., NS. अनिभृतं।
3. KSS., NS. ज्ञेया।
4. KSS., NS. गुणान् सखीनामाख्याति।
5. KSS., NS. प्रददाति च।
6. KSS., NS. संपूजयति।
7. KSS., NS. तथा।
8. KSS., NS. समागमं प्रार्थयते दृष्टा हृष्यति चाधिकम्।
9. KSS. तुष्यन् यस्य।
10. KSS. झटिति।
11. KSS., NS. परिक्लेशांश्च सहते चुम्बिता प्रतिचुम्बति।
12. KSS., NS. यानुरक्ता तु सा भवेत्।
13. KSS., NS. लिङ्गानि चुम्बितास्यं प्रमार्जति।

अनिष्टां च कथां ब्रूते प्रियमुक्तापि कुप्यति ।
[1]प्रद्वेष्टि चास्य मित्राणि भजतेऽरिजनं तथा ॥२४॥
शेते पराङ्मुखी [2]चापि शयने पूर्वशायिनी ।
सुमहत्यु[3]पकारेऽपि न तोषमुपयाति च ॥२५॥
क्लेशं न सहते चापि तथा कुप्यत्यकारणात्[4] ।
[5]या स्यादेवंप्रकारा तु विरक्ता तां विनिर्दिशेत् ॥२६॥
[6]हृदयग्रहणोपायमस्या व्यापारचेष्टितम् ।
अर्थप्रदर्शनं चैव [7]उपदानं पुनर्भवेत् ॥२७॥
[8]अकारणमुपन्यासस्तथैव व्याधितापि च ।

---

व्यसन इति नायकस्य । अनिष्टां कथां ब्रूते इति पर्वतादपि (पूर्वक्रतारिति?) । हृदयं गृह्यते यैरुपायैः अस्य इति रक्ताया व्यापारचेष्टितमिति तदीय हृदयग्रहणव्यापारतात्पर्यत्वं कामतन्त्रे चेष्टितम् । अर्थस्य प्रदर्शनमिदं ममास्तीति । उपन्यासः (उपदानं ?) अर्थस्य, दास्यामीति । उपन्यासः अन्यमुखेन काचिदनुरक्तस्याङ्गनास्तीति कथनम् ।(व्याधितेति) विचित्रा आधयो यस्य तस्य भावः । ततो हेतोरसेवनम् । विचित्राभिप्रायदर्शनव्याजेन तन्निकटादपसर्पणम् इति

---

1. NS. मित्राणि चास्य प्रद्वेष्टि शत्रुपक्षं प्रशंसति (तस्य शत्रुं) ।
2. KSS. चैव शय्यायां (स्था) ।
3. KSS., NS. चारेऽपि न तुष्यति कथंचन ।
4. KSS., NS. अकारणे ।
5. KSS. यस्यामेवं विकारास्तु (NS. प्रकारास्तु) ।
6. KSS., NS· हृदयग्रहणानि स्युः व्यापारस्य विचेष्टितम् ।
7. KSS. NS. तथा सद्भावदर्शनम् ।
8. KSS., NS. अर्थोपन्यास एवं स्यादुपन्यासस्तथैव हि ।

[1]व्याजात्त्यागोऽथ निकृष्टाद्भावोपक्षेप एव च ॥२८॥
दारिद्र्याद्व्याधितो[2] दुखात्पारुष्याद्दुःश्रवा[3]त्तथा ।
प्रवासगमनादेव[4] ह्यातिलोभादतिक्रमात् ॥२९॥
[5]अतीवाभिगमाच्चापि तथा विप्रियकारणात्[6] ।
एभिः स्त्री पुरुषो वापि कारणैस्तु विरज्यते ॥३०॥
भावग्राहीणि नारीणां कार्याणि मदनाश्रये ।
[7]तुष्टिमेति यथा नारी प्राप्यते पुरुषैरथ ॥३१॥
लुब्धामर्थप्रदानेन कलाज्ञानेन पण्डिताम् ।
चतुरां लडहत्वेन[8]ह्यनुवृत्त्या च मानिनीम् ॥३२॥
[[9]भूषणग्रहणाच्चापि भृङ्गारमुखरो [10]भवेत्] ।
पुरुषद्वेषिणीमिष्टैः[11] कथायोगैरुपक्रमः[12] ॥३३॥

---

यावत् (व्याजात्परित्याग इति) । एषोऽन्यत्र रागीत्यन्यमुखेनाभिधानं भावोपक्षेपः । रक्ताया अप्येतानि विरागकारणानीत्याह—दारिद्र्यादित्यादिभ्यः, अपत्यमरणादेः, अश्राव्यत्वं यद्वचनं पारुष्यं ततो यत एवं तेनास्यापि रागं रक्षेदिति भावग्राहीणीति । प्राप्यत इति सेव्यत इति यावत् । पुरुषैरिति कुशलैरिति भावः ।

---

1. KSS. व्याधितानां परित्यागो भावोपक्षेप एव च (NS. व्याधितो यः) ।
2. NS. व्याधितात् ।
3. KSS., NS. दश्रुतात् ।
4. KSS. गमनन्मानाद (NS. गमनो) ।
5. KSS. अतिवेलागमत्वाच्च ।
6. KSS., NS. सेवनात् ।
7. KSS. या न च प्रीयते । NS. यैर्नं कुप्यति या नारी क्रुद्धो वापि प्रसीदति ।
8. KSS. क्रीडनत्वेन NS. चैव चातुर्यैरनुवृत्या तु भामिनीम् ।
9. NS. does not read ।
10. KSS. मुखतो ।
11. KSS. चेष्टकथाभिः परिसान्त्वयेत् ।
12. NS. उपक्रमेत् ।

[1]उपक्रीडनकैर्बालां [2]भीरुमाश्वासनेन च ।
गर्वितां नीचसेवाभिरुदात्तां शिल्पदर्शनैः ॥३४॥
सर्वासामेव नारीणां त्रिविधा प्रकृतिः स्मृता[3] ।
उत्तमा मध्यमा [4]नीचा वेश्यानां तु स्वभावजाः ॥३५॥
या विप्रियेऽपि [5]तिष्ठन्तं प्रियं वदति नाप्रियम् ।
[6]न दीर्घरोषा च तथा कलासु च विचक्षणा ॥३६॥
[7]शीलशोभाकुलाधिक्यैः पुरुषैर्या च काम्यते ।
कुशला कामतन्त्रेषु दक्षिणा रूपशालिनी[8] ॥३७॥
गृह्णाति कारणाद्रोषं [9]विगतेर्ष्या ब्रवीति च ।
कार्यकालविशेषज्ञा [10]सुरूपा सा स्मृतोत्तमा ॥३८॥
[11]पुरुषैः काम्यते या तु तथा कामयते च तान् ।
कामोपचारकुशला प्रतिपक्षाभ्यसूयिनी[12] ॥३९॥

---

अस्याः कथं तुष्टिरित्याह लुब्धामित्यादि । पण्डितामिति कलाविदाम् । लडहत्वेन प्रागल्भ्येन ।

---

1. NS. बालां तामपि क्रीडन् वै भीरुमाश्वासचाटुभिः ।
2. KSS. भीतां ।
3. KSS. यता ।
4. KSS., NS. चैव तृतीया चाधमा स्मृता ।
5. KSS., NS. निष्टम्भं न वदत्यप्रियं प्रियम् ।
6. NS. न चिरं क्रोधमायाति दोषं प्रच्छादयत्यपि अदीर्घरोषा च तथा कलाशिल्पविचक्षणा ।
7. KSS. काम्यते पुरुषैर्या तु कुलभोगधनाधिकैः (शोभा) ।
8. NS. धारिणी ।
9. KSS., NS. गतेर्ष्या प्रब्रवीति ।
10. KSS., NS. सुभगा ।
11. KSS., NS. पुंसः कामयते या तु पुरुषैर्या च काम्यते ।
12. KSS., NS. अत्यसूयिका ।

ईर्ष्यातुरा त्वनिभृता [1]क्षीणक्रोधाति गर्विता ।
[2]क्षणप्रसादा या चैव सा नारी मध्यमा स्मृता ॥४०॥
[3]अस्थानकोपना या तु [4]दुष्टशीलातिमानिनी ।
चपला परुषा चैव[5] दीर्घरोषाधमा स्मृता ॥४१॥
सर्वासां नारीणां यौवन[6]भेदाः स्मृतास्तु चत्वारः ।
नैपथ्यरूप[7]चेष्टागुणेन शृङ्गारमासाद्य ॥४२॥
पीनोरुगण्डज[8]घनाधरस्तनं कर्कशं रतिमनोज्ञम् ।
[9]शृङ्गारसमुत्साहं प्रथमं तद्यौवनं ज्ञेयम् ॥४३॥
गात्रं पूर्णावयवं पीनौ च पयोधरौ नतं[10] मध्यम् ।
कामस्य सारभूतं यौवनमेतद् द्वितीयं तु ॥४४॥
सर्वश्री[11] संयुक्तं रतिकरणोत्पादनं रतिगुणाढ्यम् ।
कामाप्यायितशोभं यौवनमेतत्तृतीयं[12] तु ॥४५॥

---

नीचसेवाभिरिति पादस्पर्शनादिभिः । शिल्पदर्शनैरिति विस्मयहेतुभिरित्यर्थः । प्रतिपदमशक्यो भेदसंग्रह इत्याशयेनाह—सर्वासामेवेति उत्तममध्यमाधमानां प्रत्येकमिति यावत् ।

---

1. KSS. क्षणक्रोधाभिगर्विता । NS. क्षणक्रोधा च गर्विता ।
2. KSS., NS. क्षणं प्रसाद्यते या च ।
3. NS. अस्थाने कोपमायाति ।
4. KSS., NS. दुःशीला चाति ।
5. NS. परुषा प्रतिकूला च ।
6. NS. लाभा भवन्ति KSS. लीलाश्चतस्रः स्युः ।
7. NS. वेषैर्गुणैः KSS. चेष्टागुणैः ।
8. NS. जघनस्तनाधरं ।
9. KSS., NS. सुरतं प्रति सोत्साहं प्रथमं तद्यौवनं विद्यात् (ज्ञेयम्) ।
11. KSS. कृशं ।
12. KSS., NS. सम्पूर्णं रतिकरमुन्मादनं बहुगुणाढ्यम् ।

नवयौवने व्यतीते तथा द्वितीये तृतीयके वापि ।
श्रृंगारशत्रुभूतं यौवनमेतच्चतुर्थं तु ॥४६॥
[1]अम्लानगण्डजघ[2]नाधरस्तनं [3]किञ्चिदूनलावण्यम् ।
[4]कामं प्रति नोच्छ्वासं यौवनमेतच्चतुर्थं तु ॥४७॥
नात्यर्थं क्लेशसहा न कुप्यति न हृष्यति स्त्रीभ्यः[5] ।
[6]सौख्यगुणेष्ववसक्ता नारी नवयौवना ज्ञेया ॥४८॥
किंचित्करोति मानं किंचित्क्रोधं च मत्सरं चैव ।
क्रोधे च भवति तूष्णीं यौवनभेदे द्वितीये तु ॥४९॥
रतिसंभोगे दक्षा प्रतिपक्षासूयिनी[7] रतिगुणाढ्या ।
अनिभृतगर्वितचेष्टा नारी ज्ञेया तृतीये तु ॥५०॥
[8]चित्तग्रहणसमर्था कामाभिज्ञा [9]त्वमत्सरोपेता ।
अविरहितमिच्छति सदा पुरुषं नारी चतुर्थे तु ॥५१॥

---

(सर्वासामिति) प्रथमं यौवनं यावद्विंशति । एवं त्रिंशच्चत्वारिंशत्पञ्चाशदिति विभागः । अन्ये तु षोडशपञ्चविंशतिपञ्चत्रिंशत्पञ्चचत्वारिंशदिति विभागमाहुः ।

---

1. NS. निर्मांस ।
2. KSS., जघनाधरस्तनशेषगात्रलावण्यम् ।
3. NS. शुष्कलम्बितकपोलम् ।
4. KSS., NS. कामे च निरुत्साहं ।
5. KSS., NS. प्रति स्त्रीषु ।
6. KSS. सौम्यगुणेष्वासक्ता ।
7. KSS. प्रतिपन्नासूयिनी ।
8. KSS., NS. पुरुषग्रहण ।
9, KSS., NS, हि ।
10. KSS., NS. अविरहमिच्छति नित्यं नारी ज्ञेया चतुर्थे तु ।

यौवन[1]भेदास्त्वेते विज्ञेया नाटकेषु चत्वारः ।
पुनरेव [2]तु पुरुषाणां च कामतन्त्रे प्रवक्ष्यामि ॥५२॥
[3]चतुरोत्तमौ तु मध्यस्तथा[4] च नीचः प्रवृत्तकश्चैव ।
[5]स्त्रीसंप्रयोगविषये [6]ज्ञेयाः पुरुषास्त्वमी पञ्च ॥५३॥
[7]समदुःखक्लेशसहः प्रणयक्रोधप्रसादने कुशलः ।
[8]योऽर्थी नात्मच्छन्दो दक्षश्चतुरः स बोद्धव्यः ॥५४॥
यो विप्रियं न कुरुते [9]नार्याः किंचिद्विरागसंज्ञातम् ।
[10]अज्ञातेप्सितहृदयः स्मृतिमान्धृतिमान् स तु ज्येष्ठः ॥५५॥
मधुरस्त्यागी रागं न याति मदनस्य [11]चापि वशमेति ।
अवमानितश्च नार्या विरज्यते चोत्तमः स पुमान्[12] ॥५६॥
[13]सर्वार्थैर्मध्यस्थो भावग्रहणं करोति यो नार्याः[14] ।
किंचिद्दोषं दृष्ट्वा विरज्यते मध्यमः स भवेत्[15] ॥५७॥

---

एषूपचारभेदमाह—नात्यर्थमिति क्लेशः दशनादिकृत्यं नातीव सहते । रतिगुणाढ्या कामतन्त्रप्रयोगप्रगल्भेत्यर्थः । अविरहितमिति भावैस्त्रिभिरपि ।

---

1. KSS., NS. लम्भा ह्येते ।
2. KSS., NS. च पुरुषगुणान् कामिततन्त्रे ।
3. NS. चतुरोन्तमौ ।
४. KSS., NS. तथाऽधमः संप्रवृत्तकः ।
5. KSS., NS. स्त्रीणां प्रयोग ।
6. KSS. विज्ञेया पुरुषास्त्विमे ।
7. NS. दुःखक्लेशसहिष्णुः प्रियवदनः ।
8. KSS., NS. रत्युपचारे निपुणो ।
9. KSS., NS. धीरोदात्तः प्रियंवदो मानी ।
10. KSS., NS. अज्ञातहृदयतत्त्वो ज्ञेयः स्मृतिमान् ।
11. KSS., NS. नापि ।
12. KSS., NS. स च भवेज्ज्येष्ठः ।
13. NS. सर्वार्थं ।
14. NS. नारीणाम् ।
14. NS. मध्यमध्यमोऽयमिति । KSS. मध्यम पुरुषः ।

[1]काले दाता ह्यवमानितोऽपि न क्रोधमतितरामेति ।

दृष्ट्वा व्यलीकमात्रं विरज्यते मध्यमोऽयमपि ॥५८॥

[2]अवमानितोऽपि नार्या [3]निर्लज्जतयाभ्युपैत्यविकृतास्यः ।

[[4]अन्यतरं संक्रान्ता स्नेहपरावृत्तभावश्च] ॥५९॥

अभिनवकृते व्यलीके प्रत्यक्षं रज्यते दृढतरं यः ।

[5]मित्रैर्निवार्यमाणो विज्ञेयः सोऽधमः पुरुषः[6] ॥६०॥

अविगणितभयामर्षो मूर्खप्रकृतिः प्रसक्तहासश्च[7] ।

[8]एकान्तदृढग्राही निर्लज्जः कामतन्त्रेषु ॥६१॥

रतिकलहसंप्रहारेष्वकर्कशः[9] क्रीडनीयकः स्त्रीणाम् ।

एवंविधस्तु[10]तज्ज्ञैर्विज्ञेयः संप्रवृत्तस्तु ॥६२॥

---

उपचारार्थं पुरुषभेदो ज्ञेय इत्याशंयेनाह—चतुरोत्तमावित्यादि । पञ्च क्रमेण लक्षयति समदुःख इति । अज्ञातेप्सितहृदय इति गम्भीर इत्यर्थः । ज्येष्ठः इति यावत् । नन्वन्यदीयं कार्यवशात्संक्रामेदित्याह— स्नेहेति अन्यदीयेन स्नेहेन प्रेम्णा परावृत्तः तद्विषयो भावोऽभिप्रायो यस्याः ।

---

1. अयंश्लोको NS. पुस्तके नास्ति ।
2. NS. अपमानितोऽपि ।
3. NS. निर्लज्जः समुपसर्पपति तथैव KSS. उपसर्पति य एनाम् ।
4. KSS. संक्रान्तान्तरमन्य…… ।
5. NS. सुहृदापि ।
6. KSS., NS. नाम ।
7. KSS. प्रकृष्टभावश्च ।
8. NS. एकान्तदृढता ।
9. KSS., NS. हारेषु कर्कशः ।
10. KSS. विधिज्ञैः विज्ञेयः सम्प्रवृद्ध स्यात् । NS. प्रवृत्तकोयमपि ज्ञेयः ।

नानाशीलाः[1] स्त्रियो ज्ञेया गूढार्थहृदयेप्सिताः[2] ।
विज्ञाय तु यथा[3]सत्त्वमुपसर्पेत्तथैव ताः[4] ॥६३॥

भावाभावौ विदित्वाऽथ तत्र[5] तैस्तैरुपक्रमैः ।
पुमानुपचरेन्नारीं कामतन्त्रं समीक्ष्य तु ॥६४॥

सामं [6]चोपप्रदानं च भेदो दण्डस्तथैव च ।
उपेक्षा चैव कर्तव्या नारीणां विषयं प्रति ॥६५॥

तवास्मि मम चैवासि[7] दासोऽहं त्वं च मे प्रिया ।
आत्मोपक्षेपणकृतं [8]यत्तत्सामेति कीर्तितम् ॥६६॥

काले काले प्रदातव्यं धनं विभवमात्रया ।
[9]यन्निमित्तान्तरकृतं प्रदानं नाम तत्स्मृतम् ॥६७॥

---

ननु किमनेन स्त्रीणां भावज्ञानेनेत्याह—नानाशीला इति अर्थनमर्थः अभिप्रायः गूढाभिप्रायं हृदयमासाम् । यथासत्त्वमिति यथाशयम् । भावाभावाविति अनुरागविरागौ नारीणां विषये बन्धनं स्वीकारः तं प्रतीति तस्मिन्साध्ये सामादयः उपेक्षान्ताः पञ्चोपाया इत्यर्थः । तान् क्रमेण व्याचष्टे तवास्मीत्यादि । आत्मन उपक्षेपो निजभावप्रदर्शनम्, काले दिवसे दातव्यमिति

---

1, KSS. लीलाः ।
2. KSS., NS. गूढार्थहृदयाश्च ताः ।
3. NS. तत्त्वं ।
4. NS. ततश्च ताः KSS. तु ताः ।
5. KSS., NS. ततः ।
6. KSS. चैव NS. योग्य ।
7. KSS., NS. चैव त्वं ।
8. NS. तत्सामेति हि संज्ञितम् । KSS. तत्सामेत्यभिधीयते ।
9. NS. निमित्तान्तरसंभूतं । KSS. सनिमित्तान्तर ।

भेदः स्यात्तत्प्रियस्ये[1] सोपायं दोषदर्शनम् ।
बन्धनं ताडनं [2]चापि दण्ड इत्यभिधीयते ॥६८॥
मध्यस्था मानयेत्साम्ना [3]लुब्धां चोपप्रदानतः ।
अन्यावबद्धभावां च भेदेन प्रतिपादयेत् ॥६९॥
दुष्टाचारे समारब्धं [4]त्वन्यभावसमुत्थिते ।
दण्डः पातयितव्यस्तु [5]मृदुताडनबन्धनैः ॥७०॥
[[6]नायकः पुरुषो वाच्यो नायिकां ताडयेच्च ताम् ।
ताडयेत्तां बुधो नारी रज्ज्वा वेणुदलेन वा ॥] ७१॥
सामादीनां प्रयोगे तु परिक्षीणे यथाक्रमम् ।
न स्याद्या च समापन्ना तामुपेक्षेत बुद्धिमान् ॥७२॥

---

नियमे न सति निमित्तविशेषकृतेन प्रमोदव्यसनादिनिबन्धनेन दानेन वर्तयतीत्यर्थः । तस्या योऽन्यः प्रियः तस्य दोषास्तथा दृश्यन्ते यथा तया सत्यत्वेन प्रतीयेरन्निति भेदः तदाह—सोपायमिति । चतुर्णामुपायानां स्वं स्वं विषयमाह—मध्यस्थामिति किञ्चित् स्निह्यन्तीमित्यर्थः । आनयेत् स्वीकुर्यात् । प्रतिपादयेदिति आत्मनि संमुखीभावं गमयेत् । दुष्टाचार इति देशात्पलायनं पुरुषान्तरगृह एव वास इत्यादिके । तत्रापि च स्त्रीषु निरपेक्षः स्यादिति मृदुताडनबन्धनैरिति । उपेक्षाया विषयमाह सामादीनामिति दण्डेनापि हि तत्साम्मुख्यं त्यजति या तस्याः

---

1. NS. प्रदानं कोपदर्शनम् ।
2. NS., KSS. वाऽपि ।
3. KSS. लुब्धामर्थं (NS. लुब्धायां) च) ।
4. KSS., NS. मध्यभावे ।
5. KSS., KS. हि ।
6. अयं KSS. NS. पुस्तकयोः न दृश्यते ।
7. NS. भवेद्वशमापन्ना KSS. भवेद्वशगा या तु ।

मुखरागेण नेत्राभ्यां विज्ञेयो [1]भावचेष्टितैः ।
द्वेष्यो वापि प्रियो वापि मध्यस्थो वापि योषिताम् ॥७३॥
अर्थहेतोस्तु वेश्यानां प्रियो वा यदि वाप्रिया ।
[2]गम्य एव नरो नित्यं मुक्त्वा दिव्यनृपस्त्रियः ॥७४॥
द्वेष्यं तु [प्रियमित्याहुः प्रियं] प्रियतरं[3] तथा ।
सुशीलमिति दुश्शीलं गुणाढ्यमिति निर्गुणम्[4] ॥७५॥
[5]प्रहसन्ती च नेत्राभ्यां यं दृष्ट्वोत्फुल्लतारका ।
प्रसन्नमुखरागाच्च लक्ष्यते भावरूपणैः ॥७६॥
[6][भावाभावौ विदित्वैव निरस्तैस्तैरुपक्रमैः ।
यत्नादुपचरेन्नारीं कामतन्त्रं प्रतीक्ष्य तु] ॥७७॥

---

किञ्चिदुपेक्षेत बुद्धिमानित्युक्तम् । किं संबुध्यत इत्याह—मुखरागेणेत्यादि । वेश्याचित्तं तु दुर्लक्षमिति प्रयत्नपरीक्ष्यमित्याशयेनाह अर्थहेतोस्त्विति । किं सर्वासां वेश्यानामयं विधिः नेत्याह—मुक्त्वा दिव्यनृपस्त्रिय इति । ननु वचने वेश्याहृदयमुपलक्षेतेत्याह—द्वेष्ये तु प्रिय इत्याहुरिति । तुरप्यर्थे ।

ननु किमस्वकार्यहृदया एव ताः, नेत्याह—उपचारबलत्वादिति अर्थकाममयादित्यर्थः माध्ये वा नो सेवया (?) ननु यद्येवंभूताः कथं ताः काम्यन्ते

---

1. KSS., NS. त्वङ्ग ।
2. KSS. गम्यो हि पुरुषो नित्यं ।
3. KSS. अप्यप्रियं ।
4. KSS., NS. निर्गुणं गुणवानिति ।
5. NS. अहसन्ती ।
6. KSS. does not read ।

उपचार[1]बलत्वाच्च विप्रलम्भात्तथैव च ।
तासु निष्पद्यते कामः काष्ठादग्निरिवोत्थितः ।।७८।।
योषितामुपचारोऽयं यथोक्तो वैशिकाश्रयः ।
कार्यः प्रकरणे [2]सम्यग्यथायोगं च नाटके ।।७९।।
एवं [3]वेश्योपचारोऽयं तज्ज्ञैः कार्यो द्विजोत्तमाः ।
अत ऊर्ध्वं[4] प्रवक्ष्यामि प्रकृतीनां तु लक्षणम्[5] ।।८०।।

इति भरतीये नाट्यशास्त्रे त्रयोविंशोऽध्यायः[6] ।

---

जनैरित्याशङ्क्यावृत्त्यैतदेवाह—उपचारबलत्वाच्चेति । यतो हृदयग्रहणोचितमुपचारं निन्दती मध्ये च विप्रलम्भयन्ती तस्मात् काम उत्सुको भवति । कामाभिनिवेशी स इत्युक्तम् । काष्ठादग्निरिति प्रत्युत दुश्चिकित्स इत्यर्थः ।

वैशिकपुरुषाधिकारे प्रवृत्तमध्यायं प्रकृते उपयोजयति योषितामिति । नाटक इति दिव्यवेश्यानां तत्र भावात् पताकानायकादिगतत्वेन चेति शिवम् ।

अध्यायो वैशिकः सोऽयं त्रयोविंशतिपूरणः ।
कृतोऽभिनवगुप्तेन भद्रग्रन्थिपदक्रमः ।।

इति श्रीमहामाहेश्वराचार्याभिनवगुप्तविरचितायां
नाट्यवेदवृत्तावभिनवभारत्यां
वैशिकस्त्रयोविंशोऽध्यायः ।।

---

1. KSS., NS. फलत्वाच्च ।
2. NS. वापि KSS. चापि
3. NS. विशेषा ।
4. KSS. परं ।
5. KSS. चित्रस्याभिनयं प्रति ।
6. बाह्योपचारो नाम पञ्चविंशः ।

श्रीः

# नाट्यशास्त्रम्

## चतुर्विंशोऽध्याय*

— ० —

समासतस्तु प्रकृतिस्त्रिविधा परिकीर्तिता।
पुरुषाणामथ स्त्रीणामुत्तमाधममध्यमा ॥१॥

---

अभिनवभारती—चतुर्विंशोऽध्यायः

त्रिधा विकल्पनं यस्यां पुमान् यत्रोपचर्यते।
तां वन्दे प्रकृतिं शम्भोः शक्तित्रयविजृम्भणात् ॥

इह कामोपचारः पूर्वं दर्शितः कामश्च स्त्रीपुरुषहेतुक इत्युक्तम्। स्त्रीणां च पुंसां च यद्यपि विचित्रः स्वभावास्तथापि ते प्रतिपदमशक्यकलना इति प्रकृतित्रयेण ते सर्वे शक्यसंग्रहा इति प्रकृतित्रयं वक्तव्यम्। तथा चाह समासत इति कामोपचारश्च शृङ्गारपर्यवसायी नायकविशेष एवेति नायकभेदा वक्तव्याः। तस्य च नायकस्यान्तःपुरो बहिर्वा किन्नामधेयः कियान्वा परिवार इति सर्वं कविना ज्ञातव्यं नटेन च। तदेवं प्रकृतिनायकपरिवारभेदानभिधाय कोऽयमध्यायोऽस्याभिचारमारभ्यते प्रकृत्यादिभेदोपचारो हि स्त्रीणां नपुंसकस्य

---

* अस्याध्यायस्य पाठक्रमो बहुधा भिद्यते। अत्र गायकेवाड-ओरियन्टल-सीरिजमुद्रित-पुस्तकानुसारमेवात्र दीयते। काशीमुद्रितपुस्तकेऽपि अयं चतुस्त्रिंशत्तमोध्यायः।
अत ऊर्ध्वं प्रवक्ष्यामि प्रकृतीनां च लक्षणम्।
नायकानां च सर्वेषां चतुर्णामपि तत्त्वतः॥ इत्यधिको मुद्रितपुस्तके पाठः।

जितेन्द्रियज्ञानवती नानाशिल्पविचक्षणा ।
दक्षिणाधमहालक्ष्या [1]भीतानां परिसान्त्वनी ॥२॥
नानाशास्त्रार्थसंपन्ना गाम्भीर्यौदार्यशालिनी ।
स्थैर्यत्यागगुणोपेता ज्ञेया प्रकृतिरुत्तमा ॥३॥
लोकोपचारचतुरा शिल्पशास्त्रविशारदा ।
विज्ञानमाधुर्ययुता मध्यमा प्रकृतिः स्मृता ॥४॥
[2]रूक्षवाचोऽथ दुःशीलाः कुसत्त्वाः[3] स्थलबुद्धयः ।
क्रोधना घातकाश्चैव मित्रघ्नाश्छिद्रमानिनः[4] ॥५॥
पिशुनास्तूद्धतै[5]र्वाक्यैरकृतज्ञास्तथालसाः ।
मान्यामान्या[6] विशेषज्ञा स्त्रीलोलाः कलहप्रियाः ॥६॥

---

(काम) विरहत्वादुपचारः स्नेहव्यवहार इत्यध्यायसङ्गतिः । तत्र प्रकृतिव्यवहारं तावदाह—समासतस्त्विति । तुर्व्यतिरेके—पूर्वं विस्तरेण स्वभावो दर्शितोऽधुना तु संक्षेपत इति ।

(लोकोपचारेति) । लोकोपचारो व्यवहार (रतस्मिन् च तु) पतत्यवश्यम्) । कृतमुपकारं ये विस्मरन्त्यकृतज्ञास्ते । मान्यामान्ययोरविशेषज्ञा इति समासः ।

---

1. KSS. दीनानां ।
2. KSS. रूक्षाः वचसि ।
3. KSS. स्वल्पबुद्धिका ।
4. KSS. चित्रघातकाः ।
5. KSS. उद्धता ।
6. KSS. मान ।

सूचकाः पापकर्माणः परद्रव्यापहारिणः ।
एभिर्दोषैस्तु संपन्ना भवन्तीहाधमा नराः ॥७॥

एवं [1]तु शीलतो नृणां प्रकृतिस्त्रिविधा स्मृता[2] ।
स्त्रीणां पुनश्च प्रकृतिं व्याख्यास्याम्यनुपूर्वशः ॥८॥

मृदुभावा [3]चाचपला स्मित[4]भाषिण्यनिष्ठुरा ।
गुरूणां वचने दक्षा सलज्जा विनयान्विता ॥९॥

रूपाभिजनमाधुर्यैर्गुणैः स्वाभाविकैर्युता[5] ।
गाम्भीर्यधैर्यसंपन्ना विज्ञेया[6] प्रमदोत्तमा ॥१०॥

नात्युत्कृष्टैर[7]निखिलैरेभिरेवान्विता गुणैः ।
अल्पदोषानुविद्धा च मध्यमा प्रकृतिः स्मृता ॥११॥

---

पुनश्चेति पूर्वं यद्यप्युक्ता तथापीत्यर्थः। तत्र हि कामोपचाराभिप्रायेण प्रकृतित्रैविध्यं व्याख्यातम् । इह तु सर्वव्यवहारविषयमिति विशेषो दृश्यते । (तत्र तु) विषयभेदादुत्तमादित्वं (सत्त्वसमुद्भवत्वात् रस्याः स्निग्धा इत्यादय आहाराः सात्त्विकस्य प्रिया इत्युच्यन्ते । तत्र हि सत्त्वमाहारविषयमेव सहधूमाभ्यवहारादिति । कृतकटुकाहारव्रतो मुनिर्न सात्त्विक इति नापि चोरो (?) घृतगुड (प) योन्नभोजी सात्त्विक इति । वचने दक्षासती गुरूणां विषये सलज्जा । नात्युत्कृष्टैरतिश्रेष्ठताहीनैः, अनिखिलैः असमग्रैः । सङ्कीर्ण

---

1. KSS. च ।
2. KSS. स्त्रियः ।
3. KSS. त्वचपला ।
4. KSS. भाविन्य ।
5. KSS. स्मृता ।
6. KSS. सा ज्ञेया ।
7. KSS. शिथिलैरेभिरेव वृता ।

अधमा प्रकृतिर्या तु पुरुषाणां प्रकीर्तिता ।
विज्ञेया सैव नारीणामधमानां समासतः ॥१२॥
नपुंसकस्तु विज्ञेयः संकीर्णोऽधम एव च ।
[1]प्रेष्यादिरपि विज्ञेया संकीर्णा प्रकृतिर्द्विजाः ॥१३॥
[2]शकारश्च विटश्चैव ये चान्येप्येवमादयः ।
संकीर्णास्ते[3]ऽपि विज्ञेया ह्यधमा नाटके बुधैः ॥१४॥
एता ज्ञेयाः प्रकृतयः पुरुषस्त्रीनपुंसकैः[4] ।
आसां तु संप्रवक्ष्यामि विधानं शीलसंश्रयम् ॥१५॥
[5]अत्र चत्वार एव स्युर्नायकाः परिकीर्तिताः ।
मध्यमोत्तमप्रकृतौ नानालक्षणलक्षिताः ॥१६॥
धीरोद्धता धीरललिता धीरोदात्तास्तथैव च ।
धीरप्रशान्तकाश्चैव नायकाः परिकीर्तिताः ॥१७॥
देवा धीरोद्धता ज्ञेयाः [6]स्युर्धीरललिता नृपाः ।
सेनापतिरमात्यश्च धीरोदात्तौ प्रकीर्तितौ ॥१८॥

---

इति । कश्चिन्मिश्रप्रकृतिः कश्चिदधमप्रकृतिरेव । प्रेष्यांश्च संकीर्णा इति स्वामिचित्तानुरोधात् । विटोऽप्येवं शकरोऽप्य (नुभूत) विभवत्वादुत्तममध्यमचेष्टितमाचरति सङ्कीर्णः । परमार्थतस्तु प्रेष्यविटशकारा अधमा एव ।

प्रकृतिभेदमभिधाय नायकभेदमाह अत्र चत्वार इति । सुरतविषये संबन्धिग्रहणे । विग्रहं वा सन्धिना दूषयतीति विदूषकः विप्रलम्भनत्वे (कथा)

---

1. KSS. चेटचादि ।
2. KSS. विदूषकः शकारश्च ।
3. KSS. नाटके ज्ञेयास्ते तज्ज्ञैः ।
4. KSS. नपुंसकाः ।
5. KSS. तत्र ।
6. KSS. ललितास्तु नृपाः स्मृताः ।

धीरप्रशान्ता विज्ञेया ब्राह्मणा वणिजस्तथा।
एतेषां तु पुनर्ज्ञेयाश्चत्वारस्तु विदूषकाः ॥१९॥
[1]लिंगी द्विजो राजजीवी शिष्यश्चेति यथाक्रमम्।
देवक्षितिभृतामात्यब्राह्मणानां प्रयोजयेत् ॥२०॥
विप्रलंभसुहृद्दोमी संकथालापपेशलाः।
व्यसनी प्राप्य दुःखं वा युज्यतेऽ[2]भ्युदयेन यः ॥२१॥
तथा पुरुष[3]माहुस्तं प्रधानं नायकं बुधाः।
[4]यत्रानेकस्य भवतो व्यसनाभ्युदयौ पुनः ॥२२॥
सपुष्टौ यत्र तौ स्यातां न भवेत्तत्र नायकः।
[दिव्या च नृपपत्नी च कुलस्त्री गणिका तथा ॥]२३॥
एतास्तु नायिका ज्ञेया नानाप्रकृतिलक्षणाः।
धीरा च ललिता च स्यादुदात्ता निभृता तथा ॥२४॥

---

विनोदने (नैः) दूषयन्ति विस्मारयन्ति । यथाक्रममिति क्रमिकमौचित्यमत्र यथोचितं योजना, तद्यथा लिङ्गी ऋषिः देवानाम्, द्विजो वीरः। सेनापते, राजा जीवी राज्ञः, शिष्यो ब्राह्मणस्य । तेषां व्यापारमाह—विप्रलम्भसुहृद इति विदूषकः ।

नन्वेकपुरुषसंभव इतिवृत्ते को नायक इत्याह—व्यसनीति । प्राप्य दुखं चेति । पूर्वमेव न व्यसनपतितो व्यसनी वा अयमपि तु सुखीभूत्वा दुखं प्राप्तः ।

नन्वेतल्लक्षणमात्रेतिवृत्तेऽनेकस्यापि रामचरित इव सुग्रीवविभीषणयो-रपीत्याह यत्रानेकस्येति । एवं नायकभेदं निरूप्य नायिकाभेदमाह दिव्या-

---

1. KSS. लिङ्गानि ते वरजवा ।
2. KSS. भूमिपेन सा ।
3. KSS. बाहुल्यप्रधानो नायकः स्मृतः ।
4. KSS. तत्र ।

[1]दिव्या राजांगनाश्चैव गुणैर्युक्ता भवन्ति हि ।
उदात्ता निस्सृता चैव भवेत्तु कुलजांगना ॥२५॥
ललिते चाभ्युदात्ते च गणिकाशिल्पकारिके ।
[प्रकृतीनां तु सर्वासामुपचाराद् द्विधा स्मृताः ॥२६॥
बाह्यश्चाभ्यन्तरश्चैव तयोर्वक्ष्यामि लक्षणम् ।
तत्र राजोपचारो यो भवेदाभ्यन्तरो हि सः ॥२७॥
ततो [2]वाक्योपचारस्तु यस्य बाह्यः स उच्यते ।
[अथ राजोपचारे च राज्ञामन्तःपुराश्रितम् ॥]२८॥
स्त्रीविभागं प्रवक्ष्यामि विभक्तमुपचारतः ।]
राजोपचारं वक्ष्यामि ह्यन्तःपुरसमाश्रयम् ॥२९॥
महादेवी तथा देव्यः स्वामिन्यः स्थापिता अपि ।
भोगिन्यः शिल्पकारिण्यो नाटकीयाः सनर्तकाः ॥३०॥
अनुचारिकाश्च विज्ञेयास्तथा च परिचारिकाः ।
तथा संचारिकाश्चैव तथा प्रेषणकारिकाः ॥३१॥
महत्तर्यः प्रतीहार्यः कुमार्यः स्थविरा अपि ।
आयुक्तिकाश्च नृपतेरयमन्तःपुरो जनः ॥३२॥

चेति । अथ परिवारभेदमाह—राजोपचारमित्यादि । महादेवीप्रभृत्यायुक्तिकान्तः सप्तदशकः स्त्रीगणः, नपुंसकादिवर्गोऽष्टादश । अत एव वक्ष्यति एतदष्टादशविधं प्रोक्तमन्तःपुरमिति, तद्विषयः परिवार इत्यर्थः । महादेवीत्येकत्वं—

1. KSS. दिव्यात्तं जातयस्तैस्तैः ।



2. KSS. बाह्ये ।

[1]अत्र मूर्धाभिषिक्ता या कुलशीलसमन्विता ।
गुणैर्युक्ता वयस्स्था च मध्यस्था क्रोधना तथा ॥३३॥
मुक्तेर्ष्या नृपशीलज्ञा सुखदुःखसहा समा[2] ।
शान्तिस्वस्त्ययनैर्भर्त्तुस्सततं मङ्गलैषिणी ॥३४॥
शान्ता पतिव्रता धीरा अन्तःपुरहिते रता ।
एभिर्गुणैस्तु संयुक्ता महादेवीत्युदाहृता ॥३५॥
एभिरेव गुणैर्युक्तास्तत्संस्कारविवर्जिताः ।
गर्विताश्चातिसौभाग्याः पतिसंभोगतत्पराः ॥३६॥
शुचिनित्योज्ज्वलाकाराः पतिपक्षाभ्यसूयकाः ।
वयोरूपगुणाढ्या यास्ता देव्य इति भाषिताः ॥३७॥
सेनापतेरमात्यानां भृत्यानामथवा पुनः ।
भवेयुस्तनया यास्तु प्रतिसम्मानवर्जिताः ॥३८॥
शीलरूपगुणैर्यास्तु संपन्ना नृपतेर्हिताः[3] ।
स्वगुणैर्लब्धसम्माना[4]स्वामिन्य इति ताः स्मृताः ॥३९॥

---

विवक्षितम् । महादेवीनां क्रमेण लक्षणान्याह अत्र मूर्धाभिषिक्तेत्यादि । सर्वेषां मूर्धनि प्रधानस्थानेत्यभिषिक्ता । वयसि मध्यमे तिष्ठतीति मध्यस्था । (अन्तःपुरेति) अन्तःपुरिके बाह्ये च वर्गे अन्तःपुराय हितं कौशल्यसंपादनम् । देव्य इति । महादेवी तु शृङ्गारोचिता नातीव भवति साभिमुख्यमभिप्रयातीत्याशयेन वासवदत्तादिषु कवयो देवी वाचोयुक्त्या व्यवहरन्ति ।

---

1. KSS. तत्र ।
2. KSS. समम् ।
3. KSS. नृपवल्लभाः ।
4. KSS. माहात्म्यां ।

रूपयौवनशालिन्यः कर्कशा विभ्रमान्विताः ।
[1]रतिसंभोगकुशलाः प्रतिपक्षाभ्यसूयिकाः ॥४०॥
दक्षा भर्तुश्च चित्तज्ञा [4]गन्धमाल्योज्ज्वलास्सदा ।
नृपतेश्छन्दवर्त्तिन्यो न ह्रीर्ष्यामानगर्विताः ॥४१॥
उत्थिताश्च प्रमत्ताश्च त्यक्तालस्या न निष्ठुराः ।
मान्यामान्यविशेषज्ञाः स्थापिता इति ताः स्मृताः ॥४२॥
कुलशीललब्धपूजामृदवो नातिचोद्धटाः ।
मध्यस्था निभृताः क्षान्ता भोगिन्य इति ताः स्मृताः ॥४३॥
नानाकलाविशेषज्ञा नानाशिल्पविचक्षणाः ।
गन्धपुष्पविभागज्ञा लेख्यालेख्यविकल्पिकाः ॥४४॥
शयनासन[3]भागज्ञाश्चतुरा मधुरास्तथा ।
दक्षाः सौम्याः स्फुटाः श्लिष्टा निभृताः शिल्पकारिकाः ॥४५॥
ग्रहमोक्षलयज्ञा या रसभावविकल्पिकाः ।
चतुरा नाट्यकुशलाश्चोहापोहविचक्षणाः ॥४६॥

---

(स्वगुणैरिति समानं) लम्भिता गुणैर्योजिता (कलाशीलव) योभिः । कर्कशाः सौभाग्यगर्वेण !

---

1. KSS. अति ।
2. KSS. लेख्यालेख्यविचक्षणाः ।
3. KSS. भोग ।
4. KSS. स्वरताललयज्ञाश्च तथाचार्योपसेविताः ।

रूपयौवनसंपन्ना नाटकीयास्तु[1] ताः स्मृताः ।
हेलाभावविशेषाढ्या[2]सत्त्वेनाभिनयेन च ॥४७॥
माधुर्येण च संपन्ना ह्यातोद्यकुशला तथा ।
अङ्गप्रत्यङ्गसंपन्ना चतुष्षष्ठिकलान्विता ॥४८॥
चतुराः प्रश्रयोपेताः स्त्रीदोषैश्च विवर्जिताः ।
सदा प्रगल्भा च तथा त्यक्तालस्या जितश्रमा ॥४९॥
नानाशिल्पप्रयोगज्ञा नृत्तगीतविचक्षणा ।
[3]अथ रूपगुणौदार्यधैर्यसौभाग्य[4]शीलसंपन्ना ॥५०॥
पेशलमधुरस्निग्धानुनादिकलचित्रकण्ठा च[5] ।
समागतासु नारीषु रूपयौवनकान्तिभिः ॥५१॥
न दृश्यते गुणैस्तुल्या यस्याः सा नर्तकी स्मृता ।
सर्वावस्थोपचारेषु या न मुञ्चति पार्थिवम् ॥५२॥
विज्ञेया दक्षिणा दक्षा नाट्यज्ञैरनुचारिका[6] ।
शय्यापाली छत्रधारी तथा व्यजनधारिणी ॥५३॥
संवाहिका गन्धयोक्त्री तथा चैव प्रसाधिका ।
तथाभरणयोक्त्री च माल्यसंयोजिका तथा ॥५४॥

---

1. KSS. च नर्तकी ।
2. KSS. विशेषज्ञा ।
3. KSS. अर्धं ।
4. KSS. वीर्य ।
5. KSS. चित्रकर्म कुशला च ।
6. KSS. शय्यापाली तथाच्युता ।
रसव्यञ्जनधारिणी संवाहिनी गन्धयोक्त्री तथा ।

एवं विधा भवेयुर्याः ताः ज्ञेयाः परिचारिकाः ।
नानाकक्ष्या विचारिण्यः तथोपवनसंचराः ॥५५॥
देवतायतनक्रीडा प्रासादपरिचारिकाः ।
यामकिन्यस्तथा चैव याश्चैवं लक्षणाः स्त्रियः ॥५६॥
संचारिकास्तु विज्ञेया नाट्यज्ञैः समुदाहृताः[1] ।
[2]प्रेषणेऽकामसंयुक्ते गुह्यगुह्यसमुत्थिते ॥५७॥
[3]नृपैर्यास्तु नियुज्यन्ते ताः ज्ञेयाः परिचारिकाः ।
सर्वान्तःपुररक्षासु स्तुतिस्वस्त्ययनेन च ॥५८॥
या वृद्धिमभिनन्दन्ति ता विज्ञेया महत्तराः[4] ।
सन्धिविग्रहसंबद्धनानाचार[5]समुत्थितम् ॥५९॥
निवेदयन्ति याः कार्यं प्रतिहार्यस्तु ताः स्मृताः ।
अप्राप्तरससंभोगा न संभ्रान्ता न चोद्भटाः ॥६०॥
निभृताश्च सलज्जाश्च कुमार्यो बालिकाः स्मृताः ।
पूर्व[6]राजनयज्ञा याः पूर्वराजा[7]भिपूजिताः ॥६१॥
[8]पूर्वराजानुचरितास्ता वृद्धा इति सुज्ञिताः ।

---

अथेत्यपिचेत्यर्थः । यामकिन्यः प्रतिदहरं जाग्रति याः ।

---

1. KSS. भोगवारिताः ।
2. KSS. प्रेक्षणैः कामसंयुक्तैः युक्ता गुह्यसमुत्थितैः ।
3. KSS. प्रेक्षणीया नृपैर्यास्तु ।
4. KSS. महत्तर्यस्तु ताः स्मृतः ।
5. KSS. रङ्ग ।
6. KSS. राज्ञा सर्वराजतु ।
7. NS., KSS. सर्वानुचरितज्ञाश्च ता वृद्धा इति संज्ञिताः ।
8. NS. कार्य··· ।
9. NS. संचरा ।

भाण्डागारेष्वधिकृता[1]श्चायुधाधिकृतास्तथा ॥६२॥
फलमूलौषधीनां च तथा चैवान्ववेक्षिकी[2]।
गन्धाभरणवस्त्राणां माल्यानां चैव चिन्तिका ॥६३॥
बह्वाश्रये तथा युक्ता ज्ञेया ह्यायुक्तिकास्तु ताः[3]।
इत्यन्तःपुरचारिण्यः स्त्रियः प्रोक्ताः समासतः ॥६४॥
विशेषणविशेषं तासां वक्ष्यामि वै द्विजाः।
अनुरक्ताश्च भक्ताश्च नानापार्श्वसमुत्थिताः ॥६५॥
या नियुक्ता नियोगेषु कार्येषु विविधेषु च[4]।
[5]न चोद्भटा असंभ्रान्ता न लुब्धा नापि निष्ठुराः ॥६६॥
दान्ताः क्षान्ताः प्रसन्नाश्च जितक्रोधा जितेन्द्रियाः।
अकामा लोभहीनाश्च[6]स्त्रीदोषैश्च विवर्जिताः ॥६७॥
सा त्वन्तःपुरसंचारे योज्या पार्थिववेश्मनि।
कारुकाः कञ्चुकीयाश्च तथा वर्षवराः पुनः ॥६८॥

---

विशेषणमिति विशेषमन्याम्यः, आयुक्तिकानां वक्ष्यामीत्यर्थः। आकाम्य इति परस्य कामयितुमनर्हा अशक्याश्च कामिता हि। सर्वे शंसन्ति आयोजनेष्विति।

---

1. KSS. सायुधा विकृताः।
2. KSS. चैवान्नवीक्षणाः।
3. KSS. विज्ञेया युक्तिका स्मृताः।
4. KSS. प्रयोगेषु न चोद्भटाः।
5. KSS. न चोद्भ्रान्ता न लुब्धा च नातिनिष्ठुरमानसाः।
6. KSS. पूज्याश्च।

औपस्थायिकनिर्मुण्डा स्त्रीणां प्रेषणकर्मणि ।
रक्षणं च कुमारीणां बालिकानां प्रयोजयेत् ॥६९॥
अन्तःपुराधिकारेषु[1] राजचर्यानुवर्त्तिनाम् ।
सर्ववृत्तान्त[2]संवाहाः पत्यागारे नियोजयेत् ॥७०॥
विनीताः स्वल्पसत्त्वा ये क्लीबा वै स्त्रीस्वभाविकाः ।
जात्या न [3]दोषिणश्चैव ते वै वर्षवराः स्मृताः ॥७१॥
ब्राह्मणाः कुशला . वृद्धाः कामदोषविवर्जिताः ।
प्रयोजनेषु देवीनां [4]प्रयोक्तव्या नृपैः सदा ॥७२॥
एतदष्टादशविधं प्रोक्तमन्तःपुरं मया ।
अतः परं प्रवक्ष्यामि बाह्यं पुरुषसंभवम् ॥७३॥
राजा सेनापतिश्चैव पुरोधा मन्त्रिणस्तथा ।
सचिवाः प्राड्विवाकाश्च कुमाराधिकृतास्तथा ॥७४॥
एके चान्ये च बहवो मान्या ज्ञेया नृपस्य तु ।
विशेषमेषां वक्ष्यामि लक्षणेन निबोधत ॥७५॥
बलवान् बुद्धिसंपन्नः सत्यवादी जितेन्द्रियः ।
दक्षः प्रगल्भो धृतिमान् विक्रान्तो मतिमांञ्छुचिः ॥७६॥

अथ बाह्यपरिवारमाह राजेति । युवराजोऽत्र राजशब्देनोक्तः । (अमात्य-

1. KSS. अधिकारो हि राजभार्यानुवर्तनम् ।
2. KSS. योगज्ञं नाट्यागारे निवेशयेत् ।
3. KSS. भाषिणः ।
4. KSS. नियोक्तव्या ।

दीर्घदर्शी महोत्साहः कृतज्ञः प्रियवाङ् मृदुः।
लोकपालव्रतधरः कर्ममार्गविशारदः ॥७७॥
उत्थितश्चाप्रमत्तश्च [1]वृद्धसेव्यर्थशास्त्रवित्।
परभावेङ्गिताभिज्ञः शूरो रक्षासमन्वितः ॥७८॥
[2]ऊहापोहविचारी च नानाशिल्पप्रयोजकः।
[नीतिशास्त्रार्थकुशलस्तथा चैवानुरागवान् ॥]७९॥
[3]धर्मज्ञोऽव्यसनी चैव गुणैरेतैर्भवेन्नृपः।
[कुलीना बुद्धिसंपन्ना नानाशास्त्रविपश्चिताः ॥८०॥
स्निग्धाः परैरहार्यश्च न प्रमत्ताश्च देशजाः।
अलुब्धाश्च विनीताश्च शुचयो धार्मिकास्तथा ॥८१॥
पुरोधो मन्त्रिणस्त्वेभिर्गुणैर्युक्ता भवन्ति हि।
[4]बुद्धिमान्नीतिसंपन्नस्त्यक्तालस्यः प्रियंवदः ॥८२॥
पररन्ध्रविधिज्ञश्च यात्राकालविशेषवित्।]

---

इति) अमेति सहार्थे सहभवाः सहचारिणोऽमात्या इत्येकोऽर्थः। अनुरागवानिति प्रजासु, प्रजास्वयत्नानुरक्ताः, अनुरागोऽहि सार्वगुण्यमिति कौटल्यः अव्यसनिभिः स्त्रीमद्यमृगयाक्षादावसक्ताः । (अर्थशास्त्रस्येति) अर्थशास्त्रस्य योऽर्थं एकवाक्य-तात्पर्यादिना तज्जानाति। परैरहार्या इति अभेद्याः। ज्ञानं अर्थशास्त्रय, (तस्य) विधौ (ज्ञानं) विज्ञानं तदधिष्ठानकौशलं लक्ष्यलक्षणाज्ञा इति यावत्। (प्राड्विवाक इति) पृच्छति विवादपदे निर्णयमिति प्रायो विवदितारस्तेषां विवेक

1. KSS., NS. वृद्धः स्मृत्यर्थशास्त्रवित्।
2. NS. नानाशास्त्रार्थतत्वज्ञः।
3. NS. कृतज्ञः।
4. NS. शीलवान् सत्वसम्पन्नः।

अर्थशास्त्रार्थकुशलो ह्यनुरक्तः कुलोद्भवः[1] ॥८३॥
[2]देशवित्कालविच्चैव कर्तव्यः क्षितिपैः सदा ।
व्यवहारार्थतत्त्वज्ञा बुद्धिमन्तो बहुश्रुताः ॥८४॥
मध्यस्था[3]धार्मिका धीराः कार्याकार्यविवेकिनः[4] ।
क्षान्ता दान्ता जितक्रोधा [5]सर्वत्र समदर्शिनः ॥८५॥
ईदृशः प्राड्विवाकास्तु स्थाप्या [6]धर्मासने द्विजाः ।
उत्थिताश्चाप्रमत्ताश्च त्यक्तालस्या जितश्रमाः ॥८६॥

---

उच्यते यैस्तैः प्राड्विवाकः, पृच्छेः क्विवचीति क्विपि दीर्घे प्राडिति रूपम् । विपूर्वस्य ब्रूतेर्घञि विवाक इति । नयोऽत्रार्थशास्त्रं नयहेतुत्वात् । एवं विनयोऽत्र धर्मशास्त्रम् । कुमाराणां राजपुत्राणां रक्षार्थमधिकृताः ।

एतच्चैषां संक्षेपेण स्वरूपमुक्तं वितत्य तु तत्प्रधानेभ्य एव शास्त्रेभ्योऽवधारयेदिति दर्शयति बृहस्पतिमतादिति बार्हस्पत्यौशनसादेरित्यर्थः । एषामिति राजसेनापत्यादीनां कुमाराधिकृतपर्यन्तानां यदेतैर्ज्ञातव्यमुपहरणीयं वा संपाद्य तदपि बार्हस्पत्यादेरभिलक्षयेदिति संबन्धः ।

ननु कियन्तः प्राड्विवाका इत्याह सभ्यानां चेति । तन्मतादेव जानीयादित्यर्थः । प्रजानां मात्स्यन्यायाद्रक्षितुं राज्ञोऽधिकारः, मात्स्यो न्यायश्च विवादनिर्णयेन रक्ष्यते । तत्र च प्राड्विवाका एव प्रधानम् । तथा च प्राड्विवाको राजस्थानीय इति लोके प्रसिद्धम् । प्रधाने च व्यपदेशं कुर्वन्नुपसंहरति इत्येष वो मया प्रोक्तः प्राड्विवाकविनिर्णय इति । राजोपयोगीति बाह्याभ्यन्तरपरिवारनिर्णय इति यावत् ।

---

1. NS. कुलेवृतः KSS. प्रजासु च ।
2. KSS. यो धार्मिकस्तथामात्याः कर्त्तव्याः भूमिपैः सदा । (NS. भवेत्सेनापतिर्गुणैः)
3. KSS. धार्मिकधियः ।
4. KSS., NS. विचक्षणाः ।
5. KSS. नोद्धता ।
6. KSS. धर्मपरैः नृपैः । NS. धर्मासनेष्वथ ।

स्निग्धाः क्षान्ता विनीताश्च मध्यस्था निपुणास्तथा ।
नयज्ञा विनयज्ञाश्च ऊहापोहविचक्षणाः[1] ॥८७॥
[2]सर्वशास्त्रार्थसंपन्नाः [3]कुमाराधिकृतास्तथा ।
बृहस्पतिमतादेषां गुणांश्चाभिकांक्षयेत्[4] ॥८८॥
विज्ञेयं [5]चोपहार्यं च सभ्यानां च विकल्पनम् ।
इत्येष वो मया प्रोक्तः [6]प्राड्विवाकविनिर्णयः ॥८९॥
अत ऊर्ध्वं प्रवक्ष्यामि चित्राभिनयनं पुनः[8] ॥९०॥

इति भरतीये नाट्यशास्त्रे
पुंस्त्र्युपचारो नामाध्याय-
श्चतुर्विंशः ॥

---

अध्यायान्तरमासूत्रयति अत ऊर्ध्वमिति । पुनः पुनरयमभिप्रायो यद्यपि सामान्याभिनये चित्राभिनयोऽस्ति तथापि रसस्वभावविशेषो दर्शितः । शृङ्गार-तद्व्यभिचार्यादीनां हि प्राधान्यं पूर्वमेव दर्शितम् । चित्राभिनये तु रसाद्युपयो-गिबाह्यवस्तुविषयमेवाभिनयानां भावनारूपं मिश्रीकरणात्मकं समानीकरण-मुच्यते । तेन चित्राभिनयः सामान्याभिनयविशेषभूत एवेति शिवम् ॥

चतुर्विंशोऽयमध्यायः किञ्चित्स्कृतविवेचनः ।
मयाभिनवगुप्तेन शिवदास्यैकशालिना ॥

इति श्रीमहामाहेश्वराचार्याभिनवगुप्तविरचितायां
नाट्यवेदवृत्तावभिनवभारत्यां स्त्रीपुंसोपचारोऽध्यायश्चतुर्विंशः

---

1. KSS. विशारदाः ।
2. NS. नानारूपैः समायुक्ताः गुणैरेते भवन्ति हि ।
3. KSS. कामाद्यविकृताः ।
4. KSS. अभिलक्षयेत् ।
5. KSS. चापधूर्यं च समास्तारविकल्पनम् NS. गुणानां प्रविभागकम् । वाचि कर्मज्ञैः········विकत्थनम्
6. NS. प्राग्विधोकादिनिर्णयम् ।
7. KSS. लक्षणं भूमिकास्वपि ।
8. NS. चित्राभिनयनं मुने ।

श्रीः

# नाट्यशास्त्रम्

## पञ्चविंशोऽध्यायः

— ० —

[1]अंगाद्यभिनयस्यैव यो विशेषः क्वचित्-क्वचित् ।

अनुक्त उच्यते चित्रः[2] स चित्राभिनयस्स्मृतः ॥१॥

---

अथ पञ्चविंशोऽध्यायः

वागङ्गसत्त्वचेष्टाचित्राभिनयप्रयोगरचनचणः ।

संसारनाट्यनायकपुरुषाकारः शिवो जयति ॥

सामान्याभिनयस्य चित्राभिनयः शेष इत्युक्तम् । केवलसामान्याध्याये रसात्मकप्रधानं पदार्थविशेषमभिनयानां समानीकरणम् । इह तु तदुपयोगी विभावादिविषयम् । किञ्चैक एवाभिनयः पूर्वं यो निरूपितः स एव कार्यान्तरालाभे तद्विरुद्धमर्थमभिनयतीति चित्र उच्यते । तद्वैदग्ध्यमध्याये निरूप्यत इति सङ्गतिः । तदेतदाह अङ्गाद्यभिनयस्यैवेति । अङ्गमिति करणाङ्गहारास्तेषामभिनयत्वं नोक्तम् । तर्हि वक्ष्यते—

शिखिसारसहंसाद्या स्थले ये च स्वभावतः ।

रेचकैरङ्गहारैश्च तेषामभिनयः······—॥ इत्यादि ।

आदिग्रहणे विभावादि विभावोऽपि विभावस्याभिनय इति वक्ष्यते । अभिनीयतेऽनेनेत्यभिनयः । तस्य च विशेषः उत्तमोत्तमेत्यादिना वक्ष्यते । अभिनीयत इति चाभिनयः । यो ह्यन्येनाभिनय उक्तः स इहाभिनयान्तरस्याप्यभिनयत्वेनोक्तो यथा "अलपद्मकपीडाभिः सर्वार्थग्रहण" मिति । अङ्गाभिनयस्येति समाहारे वृत्तिस्तस्य विशेषो य उच्यत इति संबन्धः । क्वचिदिति । न सर्वत्र ।

---

1. KSS. अङ्गाभिनयनस्येह ।
2. KSS. यस्मात् ।

उत्तानौ तु करौ कृत्वा [1]स्वस्तिकौ पार्श्वसंस्थितौ ।
उद्वाहितेन शिरसा तथा चोर्ध्वनिरीक्षणात्[2] ॥२॥
प्रभातं गगनं रात्रिः[3] प्रदोषं दिवसं तथा ।
[4]ऋतून् घनान् वनान्तांश्च विस्तीर्णांश्च जलाशयान् ॥३॥
दिशो ग्रहान् सनक्षत्रान् [5]किञ्चित् स्वस्थं च यद्भवेत् ।
[6]तस्य त्वभिनयः कार्यो नानादृष्टिसमन्वितः ॥४॥
एभिरेव करैर्मुयस्तेनैव शिरसा पुनः ।
अधो निरीक्षणेनाथ [7]भूमिस्थान् संप्रदर्शयेत् ॥५॥
स्पर्शस्य [3]ग्रहणेनैव तथोल्लुकसनेन च ।
चन्द्रज्योत्स्ना सुखं वायुं रसं गन्धं च निर्दिशेत् ॥६॥

---

अत्राभेदतः अस्मात्क्वचिदनुक्तोऽसौ विशेषः क्वचित्तूक्त एव "स्वस्तिकविच्युतिकरणा" (९-२१)द् इत्यादि । य एवासावधिको विशेषः तदेव चित्रमभिनयम् । यतः संपादयति तत उपचारात् । चित्राभिनयस्तत्र तत्र प्रभातादयः सर्वलोकसाधारणा इति तद्विषयस्याभिनयस्य सहकारियोगेन चित्रत्वं दर्शयितुमाह उत्तानौ तु करौ कृत्वेति । (९-१३६) "स्वस्तिकविच्युतिकरणाद्दिशो घनाः खं वनं समुद्राश्च । ऋतवो महीतलोच्चं विस्तीर्णं चाभिनेयं स्या" दित्युक्तम् । संयुक्तहस्ते स्वस्तिके । अत्रोत्तानत्वं पार्श्वस्थता शिरसो उद्वाहनं दृष्टेरूर्ध्वता इत्यादिविशेष उच्यते । एवमुत्तरत्र योज्यम् । नानादृष्टीति । कदाचिद्विस्मिता क्वचिच्च विहीनेत्यादिक्रमेण ऊर्ध्वं स्वविरुद्धमधस्स्थं त्वित्थमाभिनेयमित्याह अधोनिरीक्षणेनेति । स्वस्थमित्युक्तं गगने च मृगाङ्कादयः पदार्थास्ते कथमभिनेया इत्याह स्पर्शस्य ग्रहणेनैवेति ।

---

1. KSS. पताके स्वस्तिकं तथा ।
2. KSS. निरीक्षितैः ।
3. KSS., NS. रात्रिम् ।
4. KSS. ऋतुन् घनान्धकारांश्च NS. जन्तून् व्यस्तान्समस्तांश्च ।
5. NS. दृष्टयश्च भवेदिह ·
6. NS. तान्येवमभितो (ने) यानि नानाभावरसार्थतः ।
7. NS. भूयिष्ठं सम्प्रयोजयेत् ।
8. KSS. ग्रहणं चैव तथोत्सुकघनेन च ।

[1]वस्त्रावकुण्ठनात्सूर्यं रजोधूमानिलां[2]स्तथा ।
भूमितापमथोष्णं[3] च कुर्याच्छायाभिलाषतः ॥७॥
[4]ऊर्ध्वाकेकरदृष्टिस्तु मध्याह्ने सूर्यमादिशेत् ।
उदयास्तगतं[5]चैव विस्मयार्थैः प्रदर्शयेत् ॥८॥
यानि सौम्यार्थयुक्तानि सुखभावकृतानि च ।
गात्रस्पर्शैस्सरोमाञ्चैस्तेषामभिनयो भवेत् ॥९॥
यानि स्युस्तीक्ष्णरूपाणि तानि चाभिनयेत्सुधीः[6] ।
[7]असंस्पर्शैस्तथोद्वेगैस्तथा मुखविकुण्ठनैः[8] ॥१०॥
गम्भीरोदात्तसंयुक्तान[9]र्थानभिनयेद्बुधः[10] ।
साटोपैश्च सगर्वैश्च गात्रैः सौष्ठवसंयुतैः ॥११॥

---

"किञ्चिदाकुञ्चिते नेत्रे कृत्वा भ्रूक्षेपमेव च ।
तथांसगण्डयोः स्पर्शादिति ॥" (२२-२८) उलूकवदंसना यस्योर्ध्वं विधूननं। रज इति धूलिः । उदयास्तमयोः पूर्वपश्चिमपर्वतयोः गतं सूर्यं स्मयोऽभिनयोऽर्थोऽभिनयत्वेन प्रयोजनं येषामिति विस्मयाभिनयैर्निदर्शयेदिति यावत् । सर्वग्राहकं लक्षणमाह—यानि सौम्यार्थयुक्तानीति । सौम्यं येषां प्रयोजनं एतदेव स्फुटयति सुखप्रधानस्य भावस्य कृतं संपत्तिर्येभ्यः सुखप्रधानो भावः सोम इव सौम्यसुखायेत्वाद्यः । विकुण्ठनैः सङ्कोचनैः । गम्भीरोदात्तसंयुक्तानिति भावप्रधानो निर्देशः । तेन यद्विषयां गांभीर्यमुदायुक्तत्वं च । आदावत्र शाखाविस्तरः गन्धर्व इत्यात्मनिर्देशादिगम्भीरोदात्तप्रसंगाद्राजोचितहाराभिनय········पवीतदेशस्थमरालमिति । आद्या धनुर्नताकुञ्चितोऽङ्गुष्ठकः शेषः

---

1. KSS. वक्रावगुण्ठनात् ।
2. KSS., अनलान् NS. अनिलौ ।
3. KSS. तथा चोष्णं ।
4. NS. ऊर्ध्वा······ ।
5. NS. गता ।
6. KSS., NS. नरः ।
7. NS. अस्पर्शनसमुद्वेगैः ।
8. NS. विकूणनैः KSS. विघूर्णनैः ।
9. KSS. एतान् ।
10. NS. पुनः ।

यज्ञोपवीत[1]देशस्थमरालं हासमाविशेत् ।
स्वस्तिकौ [2]विच्युतौ हारस्रग्दामार्थान् निदर्शयेत् ॥१२॥
[3]भ्रमणेन प्रदेशिन्या दृष्टेः परिगमेन च ।
[4]अलपद्मकपीडायाः सर्वार्थग्रहणं भवेत् ॥१३॥
[5]श्रव्यं श्रवणयोगेन दृश्यं दृष्टिविलोकनैः[6] ।
[7]आत्मस्थं परसंस्थं वा मध्यस्थं वा विनिर्दिशेत् ॥१४॥
विद्युदुल्का[8]घनरवाविष्फुलिंगार्चिषस्तथा ।
[9]त्रस्तांगाक्षिनिमेषैश्च[10] तेऽभिनेयाः प्रयोक्तृभिः ॥१५॥

---

भिन्नोर्ध्ववलिना ह्यन्तराले भारो देहस्य भूगगनाहारो वक्षनः पुनरपि तमेव गत्या सर्वग्रहणं तथैव लोकस्येति कर्मोक्तं सूचीमुखस्य तादृशः परितो भ्रमणेन गमनविशेषमाह । भ्रमणेन प्रदेशिन्याः दृष्टेः सर्वार्थेऽभिनयेऽभिनयान्तरमप्याह अलपद्मकपीडादिरिति । अलपद्मकशब्देन तदङ्गुल्यः पीडा करतलेन तासां संयोगः, तत्र च बहुत्वं विवक्षितं तेनायमर्थः "आवर्तिन्यः करतल" (९-९१) इति यः अलपल्लव उक्तस्तस्य क्रमेण कनीयः स्यादिति कांगुलीति हस्ततलेन संयोजयेदिति । सर्वार्थाभिनयः । एतच्च रूपमलपद्मस्य प्राङ्नोक्तम् । अथ यदा कार्त्स्न्येन सर्वशब्दः प्रवर्तते । तद्यथा सर्वः शब्द इत्यादौ तदा विशेषसहकारिणमाह—श्रव्यं श्रवणयोगेनेति । (२२-७६) "कृत्वा साचीकृत्वा तां दृष्टिं शिरः-पार्श्वानतमित्याश्रवणयोगः तत्सहितशब्दविषयः सर्वाभिनयः विद्युदादिविषये येऽभिनया उक्ताः । तद्यथा "सूची विरलांगुली विद्युति चक्रं च तटिल्लता" (९-६६) इत्युक्तत्वात् । तेषां विशेषमाह—त्रस्तेति । वस्तुत्रासाभिनयोऽङ्गानामक्षणोश्च

---

1. KSS., NS. देशे तु कृत्वारालौ करावुभौ ।
2. KSS. विद्युतौ हस्तौ रन्ध्रयामानि निर्दिशेत् ।
3. NS. भ्रमणाद्य······ ।
4. KSS., अलपल्लवपीडातः । NS. पीडानाच्चालपद्मस्य··· ।
5. KSS. श्राव्यं ।
6. NS. विचारणैः ।
7. KSS., NS. आत्मस्थं वा परस्थं वा ।
8. KSS., घनरवौ NS. घनरवो ।
9. KSS. स्रस्ताङ्गा ।
10. NS. दर्शनीयानि योक्तृभिः ।

उद्वेष्टितपरावृत्तौ करौ कृत्वा नतं शिरः ।
[1]असंस्पर्शे तथानिष्टे जिह्मदृष्टेन[2] कारयेत् ॥१६॥

वायुमुष्णं तमस्तेजो मुख[3]प्रच्छादनेन च ।
रेणुतोय[4]पतंगांश्च भ्रमरांश्च निवारयेत् ॥१७॥

कृत्वा स्वस्तिकसंस्थानौ पद्मकोशावधोमुखौ ।
सिंहर्क्षवानरव्याघ्रश्वापदांश्च निरूपयेत्[5] ॥१८॥

स्वस्तिकौ त्रिपताकौ तु गुरूणां पादवन्दने ।
[6]खटकस्वस्तिकौ चापि प्रतोदग्रहणे स्मृतौ ॥१९॥

---

निमेषः संकोच इति । विद्युदादिव्यङ्ग्यमप्यभिनयमाह—उद्वेष्टितपरावृत्ताविति । परावृत्तौ समन्तादुद्वेष्टितौ क्रमात् मुक्तकनीयस्वाङ्गुलिगुणावित्येवं प्राग्भावे मुष्टिः पश्चाद्भागे तु पराङ्मुखोऽरालो इति । तत्रा सादितुः स्थितमेवात्र जिह्मदृष्टेनेति । जिह्मया दृष्ट्या "लंविता कुञ्चितपुटा शनैस्तिर्यङ्निरीक्षणैः निगूढा गूढतारा च जिह्मा दृष्टि"(८-८३)रिति "सिंहव्याघ्रेष्वभिनय" (९-१२१) इत्यूर्णनाभस्य कर्मोक्तम् । तत्र विशेषमाह—कृत्वा स्वस्तिकसंस्थानाविति । पद्मकोशावित्यत्रोत्तराभावे चोक्ते एतत्प्रकृतत्वात् "पद्मकोशस्य हस्ताङ्गुल्यः कुञ्चिता" इत्यूर्णनाभः । अन्ये पद्मकोशस्यैव तमनुक्तं कर्मेत्याहुः । त्रिपताकस्यानुक्तं कर्म दर्शयति—स्वस्तिकौ त्रिपताकौ च गुरूणां पादवन्दन इति । खटकामुखस्य कर्मोक्तं "मन्थानशरापकर्षणपुष्पापचयप्रतोदकार्याणीति" (९-६३) । तत्र प्रतोदकृत्ये विशेषमाह—खटकस्वस्तिकौ चापि प्रतोदग्रहण इति ॥

---

1. NS. असंस्पर्शेन वानिष्टं ।
2. KSS. चिह्नदृष्टेन ।
3. NS. संछादनेन ।
4. KSS., NS. पतङ्गानां भ्रमराणां च वारणम् ।
5. NS. स्वापदानां निरूपणम् ।
6. NS. स्वस्तिकौ खेटकास्यौ तु प्रतोदप्रग्रहादिषु । KSS. केटकास्यौ ।

एकं द्वि त्रीणि चत्वारि पञ्च षट् सप्त चाष्टधा[1] ।
[2]नव वा दश वापि स्युर्गणनांगुलिभिर्भवेत् ॥२०॥
[3]दशाख्याश्च शताख्याश्च सहस्राख्यास्तथैव च ।
पताकाभ्यां तु हस्ताभ्यां प्रयोज्यास्ताः[4] प्रयोक्तृभिः ॥२१॥
[5]दशाख्यगणनायास्तु परतो या भवेदिह ।
वाक्यार्थेनैव साध्यासौ[6] परोक्षाभिनयेन च ॥२२॥
[7]छत्रध्वजप[8]ताकाश्च निर्देश्या दण्डधारणात्[9] ।
नानाप्रहरणं चाथ निर्देश्यं धारणाश्रयम्[10] ॥२३॥

---

अथ सर्वव्यवहारोपयोगिसंख्याभिनयं प्रदर्शयन्नुक्तपूर्वाणामेव हस्ताना-मनुक्तं कर्म दर्शयति । एतदुक्तं भवति "सूचीमुखप्रदेशिन्या त्रिपताकांगुलिकां-गुलांगुलिविधौ ऊर्ध्वलताष्टकांगुलिचतुष्केण मुकुलहस्तविकासतया चैकादितया पञ्चता संख्या, षडादिका तु द्वाभ्यां यथा मुकुले सूच्यास्येन षट् यावन्मुकुले यौ दशपर्यन्ता गणना यावतीति दशपर्यन्ता गणना यावत् ततः परन्तु बहुत्वा-भिनय एवेत्याह—दशा इत्यादि । दशभिराख्या येषां तेऽत्र विंशत्यादयः विंशेति हि विंशति तस्मादत्र पताकाभ्यामभिनय इत्याह दशाख्येति । आख्या-शब्दोऽवधिवाची । आख्यति प्रतते भावा यावतीति । दशपर्यन्ता गणना यावतीति दशपर्यन्ता गणना यावत्ततः परा सा संक्षेपेणाभिनेया बहुत्वमात्रेण वाक्यार्थशब्दोऽत्र संक्षिप्तमुपलक्षयति । पदार्था हि तत्र संक्षिप्यन्ते । एतच्च परोक्षाभिनये । प्रत्यक्षे त्वेकैकस्य निर्देशेनैव गणनेति यावत् । आयतदण्ड-ग्रहणमिति(९-६२) । खटकामुखस्य सामान्येन कर्मोक्तम् । तद्विशेष्यं दर्शयितुमाह

---

1. KSS., NS. वा ।
2. KSS. नव वा दश वा चैव गणानाङ्गुलिर्भवेत् ।
3. NS. दससंख्या ।
4. KSS., NS. अभिनेयाः ।
5. NS. दशम्ये (म्यो) ।
6. KSS. सा ।
7. KSS. चित्र ।
8. NS. पताकासु निर्देश्यं दण्डवारणम् ।
9. KSS. दण्डधारणैः ।
10. NS. वाप्यनेकधा ।

[1]एकचित्तो ह्यधोदृष्टिः किञ्चिन्नतशिरास्तथा[2] ।
[3]सव्यहस्तश्च सन्दंशः स्मृते ध्याने वितर्किते ॥२४॥
उद्वाहितं शिरः कृत्वा [4]हंसपक्षौ प्रदक्षिणौ ।
[अपत्यरूपणे कार्यावुछ्रयौ च प्रयोक्तृभिः ॥]२५॥
उद्वाहितं शिरः कृत्वा हंसवक्त्रं तथोर्ध्वगम् ।
[6][प्रसादयच्च यं मानं दीर्घसत्वं च निर्दिशेत् ॥]२६॥
अरालं च शिरस्स्थाने समुद्वाह्य तु वामकम् ।
गते निवृत्ते ध्वस्ते च [7]श्रान्तवाक्ये च योजयेत् ॥२७॥
सर्वेन्द्रियस्वस्थतया प्रसन्नवदनस्तथा[8] ।
विचित्र[9]भूतलालोकैः शरदन्तु विनिर्दिशेत् ॥२८॥
गात्र[10]संकोचनाच्चापि सूर्याग्निपटुसेवनात्[11] ।
हेमन्तस्त्व[12]भिनेतव्यः पुरुषैर्मध्यमाधमैः ॥२९॥

---

छत्रध्वजपताकाश्चेति । दण्डधारणे एव तत्प्रकारमन्तर्भूतमित्यर्थः । चकारेणाभिनयान्तरमप्यत्र सूचयति । अथशब्दे च । तद्यथा शिरस उपर्यधोमुखः पताकछत्रे पञ्चाँगुल्यूर्ध्वध्वजे सूचीमुख्यांगुलिपताकायां मुष्टिशिखरकपित्थमृगशीर्षकाद्या यथायोगं प्रहरणेषु योगध्याने स्तोक इति (९-११४)क्वचिद्विस्मिता अपूर्वशालिसंपद्दर्शनात् क्वचित् "ग्लानाभीष्टादर्शना" दित्यादि दृष्टिभेदादि चाद्यो व्यसनसंभवस्तस्मिन्निमित्ता यावस्थान्तरप्राप्तिः ततो हेतोरिति संबन्धः । रूक्षस्येति । उद्वेजनस्य प्रावृङ् वर्षारात्रस्य यथा प्रथमे भागे वर्षितुं प्रावृङ्मेघा-

---

1. NS. एकचित्ते ।
2. KSS. शिरः ।
3. KSS., NS. कुर्वीत हस्तसंदशं स्मृतेर्ध्यानवितर्किते ।
4. NS. हंसपक्षं तथोर्ध्वगम् ।
5. NS. does not read.
6. NS. प्रासादमुच्छ्रयामानं दीर्घं गर्वं च निर्दिशेत् । KSS. does not read.
7. KSS. श्रुते ।
8. KSS., NS. दिक्प्रसन्नतया तथा ।
9. KSS., NS. कुसुम ।
10. KSS. संकोचेनेनापि ।
11. KSS., NS. पटवेशनात् ।
12. KSS. स्त्वभिनेयः स्यात् पुरुषैर्मध्यमोत्तमैः ।

शिरोदन्तोष्ठकम्पेन गात्रसंकोचनेन च ।
कूजितैश्च सशीत्कारैरधमश्शीतमादिशेत्[1] ॥३०॥
अवस्थान्तर[2]मासाद्य कदाचित्तूत्तमैरपि ।
[3]शीताभिनयनं [4]कुर्याद्दैवाद्व्यसनसंभवम् ॥३१॥
[5]ऋतुजानां तु पुष्पाणां गन्धाघ्राणैस्तथैव च ।
रूक्षस्य वायोः स्पर्शाच्च शिशिरं रूपयेद्बुधः ॥३२॥
प्रमोदजननारम्भैरुपभोगैः पृथग्विधिः[6] ।
वसन्तस्त्वभिनेतव्यो नानापुष्पप्रदर्शनात् ॥३३॥
[7]स्वेदप्रमार्जनैश्चैव भूमितापैः सवीजनैः[8] ।
[9]उष्णस्य वायोः स्पर्शेन ग्रीष्मं त्वभिनयेद्बुधः ॥३४॥
कदम्बनीपकुटपैः[10] शाद्वलैः सेन्द्रगोपकैः ।
[11]मेघवातैः सुखस्पर्शैः प्रावृट्कालं प्रदर्शयेत् ॥३४॥

---

यत्रेति । निर्घातः आकाशस्फोटः शब्दो गर्जितादन्य एव चिह्नमिति पुष्प-पुष्पादिशेषषड्विशेष इति । तत्कालोचितो वस्त्वाभरणप्रसाधनादिः यस्मिन्निति वक्तव्ये संबन्धमात्रापेक्षया षष्ठी कर्मेति क्वचिद्रूपानुसरणमित्यादिरूपं यथा क्वचिदातपः क्वचिच्चन्द्रोद्योतः । भावानां विभावैरभिनयो यथा क्रोधस्य परस्थस्य सूचिमुखांगुल्यादिपरः सन्निर्दिश्यते तद्द्वारेण क्रोधः । अनेन च

---

1. NS. कूजितैः श्वासशीत्कारैः शीतं हीनो विनिर्दिशेत् ।
2. KSS. सम्प्राप्तैरुत्तमैश्च कदाचन ।
3. NS. शीतातपाभिनयनं ।
4. NS. कार्यं व्यसनसम्भवम् । KSS. कार्यं दैवव्यसनसम्भवे ।
5. KSS, मधुदानात्तु । NS. reads this verse as.—
   रुक्षस्य वायोः स्पर्शेन समाघ्राणेन चैव हि
   ऋतुजानां तु पुष्पाणां शिशिरं दर्शयेन्नरः ।
6. KSS. तथोत्सवैः ।
7. KSS. स्वेदाप्रमार्जनाच्चापि ।
8. KSS. सुवीजनैः ।
9. KSS. उष्णाश्च वायोः स्पर्शश्च ।
10. KSS., NS. निम्बकुटजैः ।
11. KSS. कदम्बकैर्मयूराणां प्रावृषं सन्निरूपयेत् ।

मेघौघ[1]नादैर्गम्भीरै[2]र्धाराप्रपतनैस्तदा ।
विद्युन्निर्घातघोषैश्च [3]वर्षारात्रं समादिशेत् ॥३६॥
[4]यद्यस्य चिह्नं वेषो वा कर्म वा रूपमेव वा ।
[5]निर्देश्यः स ऋतुस्तेन इष्टानिष्टार्थदर्शनात् ॥३७॥
एतानृतूनर्थवशाद्दर्शयेद्धि रसानुगान्[6] ।
[7]सुखिनस्तु [8]सुखोपेतान् दुःखार्थान् दुःखसंयुतान् ॥३८॥
[9][यो येन भावेनाविष्टः सुखदेनेतरेण वा ।
स तदाहितसंस्कारः सर्वं पश्यति तन्मयम्] ॥३९॥
भावाभिनयनं कुर्याद्विभावानां निदर्शनैः ।
तथैव चानुभावानां भावसिद्धिः प्रवर्तिता[10] ॥४०॥
विभावेनाहृतं कार्यमनुभावेन नीयते[11] ।

---

सहाध्याये यदुक्तं तत्राभिप्रायविशेषो दर्शितः । तत्र ह्युक्तं 'रिपुर्देशे तथैव क्रोध" (२२-अध्या) इति ।। एवं स्त्रेहाख्यपद्यरूपकेन हंसपक्षेणानुभावानां भावसिद्धया प्रवर्त्तितमभिनयं कुर्यादिति संबन्धः ।······णोऽभिनयः शोकोचितेन मुखविकूणनादिना । ननु विभावः कथमभिनय इत्याशंक्याह—विभावेनाहृतं कार्यमिति । विभावः करणत्वाद्गमक इति यावत् । विभावेन हि कार्यमाहृतः । सामग्री हि कार्यं व्यभिचरन्ती गमयत्येव ।

---

1. KSS., NS. नाद ।
2. KSS. गम्भीर ।
3. KSS. वर्षरात्रं विनिर्दिशेत् । NS. वर्षारम्भं समादिशेत् ।
4. KSS. यद् यच्च ।
5. KSS. ऋतुः स तेन निर्देश्यः । NS. निर्देशा सहितस्तेन ।
6. KSS. प्रयुञ्जीत यथा रसम् । NS. दर्शयेद्विरहानुगान् ।
7. KSS. सुखितेषु सुखोपेतां दुखार्तां दुःखसंयुताम् ।
8. NS. सुखोत्पन्नान् दुःखितान् ।
9. KSS. does not read. ।
10. KSS. भावस्यानुगमेन च ।
11. KSS. रूप्यते ।

[1]आत्मानुभवनं भावो विभावः परदर्शनम् ॥४१॥
गुर्र्मित्रं सखा स्निग्धः संबन्धी बन्धुरेव वा।
आवेद्यते हि यः प्राप्तः स विभाव इति स्मृतः[2] ॥४२॥
यत्त्वस्य संभ्रमोत्थानैरर्घ्यपाद्यासनादिभिः[3]।
पूजनं क्रियते [4]भक्त्या सोऽनुभावः प्रकीर्तितः[5] ॥४३॥
एवमन्येष्वपि [6]ज्ञेयो नानाकार्यप्रदर्शनात्।

ननु भावः कथमनुभावस्य गमक इत्याह—अनुभावेनेति । अनुभवान्तरे साहचर्यानुभवात् गमकमित्येतदमुत्र तत्त्वम् । यदुक्तं भावसिद्धिप्रवर्तितमनुभावानामभिनयं कुर्यादिति । अथ विस्मरणशीलान् प्रति शृंगग्राहिकया भावविभावानुभावस्वरूपं दर्शयति आत्मानुभवनं भाव इत्यादि । आत्मविश्रान्तं यदनुभवनं सुखदुःखसंविद्रूपं स भाव इत्यर्थः। आत्मग्रहणात् घटाद्यनुभवनं न भाव इत्युक्तं भवति। णिचमन्ये पठन्ति। तत्रार्थः आत्मानुभाव्यते येन न च तादृगर्थस्तदस्तीति प्रकर्षो गम्यते। तेन यल्लब्धसत्तार्थकं चेत् तदवश्यमनुभूयते सुखादिरूपम्। तदेव भाव इत्युक्तं भवति।

यत्तु व्यतिरिक्तवस्तुज्ञानं तत्सर्वं सुखादिजनकत्वाद्विभावः। तदाह विभावः परदर्शनमिति । तदुदाहरति गुर्र्मित्रमित्यादि । गुरुदर्शने सति विनयग्रहणे आदावुत्साह एव मित्रादेर्यथोचितं हर्षादनुविभावत्वं योज्यम्। मित्रं कार्यवशान् समानख्यातियोयगत्वात् सखा सहपांसुक्रीडनापरिचितः आवेद्यत इत्यनेन दर्शनविषयस्येव भावतेति । प्राप्त इत्यनेन चित्तवृत्तिजन्मनि गुर्वादेरन्वयव्यतिरेकौ सूचयन् कारणमाह। यत्त्वस्येति गुर्वादेः संभ्रमेण यदुत्थानं प्रत्युद्गमनं बहुवचनाद्यततं सूचकौ यथोचितं भावे संग्रहालिङ्गनादिवचनेनेत्यर्थः। उदाहरणमात्रमेतदिति दर्शयति एवमन्येष्वपीति। रसेषु शृङ्गारादिष्विति भाव. एकेन वा ग्रहणे-

1. KSS., NS. आत्माभिनयनं।
2. KSS. स तु संज्ञितः।
3. KSS. स्थानमर्घ्यासनपरिग्रहः।
4. KSS. वाचा।
5. NS. इति स्मृतः।
6. NS. तथा नानाकार्यार्थदर्शनात् (KSS. कार्यत्व)।

विभावो वापि भावो वा विज्ञेयोऽर्थवशाद्बुधैः ॥४४॥

यस्त्वपि प्रतिसंदेशो दूतस्येह प्रदीयते ।

[1]सोऽनुभाव इति ज्ञेयः प्रतिसन्देशदर्शितः[2] ॥४५॥

एवं भावो विभावो वाप्यनुभावश्च कीर्तितः[3] ।

पुरुषैरभिनेयः स्यात्प्रमदाभिरथापि वा ॥४६॥

स्वभावाभिनये स्थानं पुंसां कार्यं तु वैष्णवम् ।

आयतं वावहित्थं वा स्त्रीणां कार्यं स्वभावतः ॥४७॥

[4][प्रयोजनवशाच्चैव [5]शेषाण्यपि भवन्ति हि ।

नानाभावाभिनयनैः प्रयोगैश्च पृथग्विधैः] ॥४८॥

---

नानुभावः सूचितः । द्वितीयो विकल्पार्थः अपिशब्देन स्थायिव्यभिचारिरूपतां समुच्चिनोति । अर्थवशादिति प्रयोजनवशात् ।

ननु नियमेनायमस्याश्चित्तवृत्तौ विभाव इति शक्यं वक्तुम् । प्रयोजनान्तरयोगे तस्यैवान्यत्र विभावत्वदर्शनात् । न केवलं प्रत्यक्षेण दृश्य एवानुभवश्चित्तवृत्तिं गमयति । यावत्प्रमाणान्तरेण शब्दादिनाप्यविदित इति दर्शयितुमाह यस्त्वपि प्रतिसन्देश इति । एतच्चानुमानस्याप्युपलक्षणम् । सन्तमसे हि गद्गदगुरुसज्जनवचनानुमेयात् । वाष्पादपि हि भवति शोकावगमः । एतदुपसंहरति एवमित्यादि । पुरुषैः प्रमदाभिर्वेत्युक्तं तत्रानावेश्यादेषां स्थानमावेदयति । गतिं च दर्शयति स्वभावाभिनय इत्यादिना । शेषाणीति । स्थानान्तराण्यपीति यावत् । यदुक्तम्—

---

1. NS. अनुभावैस्तु विज्ञेयः ।
2. KSS., NS. दर्शनात् ।
3. NS. एवं विभावो भावो वाप्यनुभावोऽथवा पुनः ।
4. KSS. does not read it .
5. NS. स्थानान्यन्यानि योजयेत् ।

[1]धैर्यलीलांगसंपन्नं पुरुषाणां विचेष्टितम् ।
[2]मृदुलीलांगहारैश्च स्त्रीणां कार्यं तु चेष्टितम् ॥४९॥
[3]करपादांगसञ्चारास्स्त्रीणां [4]तु ललिताः स्मृताः ।
[5]सुधीरश्चोद्धतश्चैव पुरुषाणां प्रयोक्तृभिः[6] ॥५०॥
[7]यथा रसं यथाभावं स्त्रीणां भावप्रदर्शनम् ।
नराणां प्रमदानां च [8]भावाभिनयनं पृथक् ॥५१॥
भावानुभावनं युक्तं[9] व्याख्यास्याम्यनुपूर्वशः ।
आलिंगनेन गात्राणां सस्मितेन च चक्षुषा ॥५२॥
[10]तथोल्लुकसनाच्चापि हर्षं सन्दर्शयेन्नरः ।
क्षिप्रसञ्जातरोमाञ्चात्[11] बाष्पेणावृतलोचना ॥५३॥
कुर्वीत नर्तकी हर्षं प्रीत्या वाक्यैश्च सस्मितैः ।
उद्वृत्तरक्तनेत्रश्च [12]सन्दष्टाधर एव च ॥५४॥

---

धैर्यलीलाङ्गसंपन्नं कृत्वा पुरुषचेष्टितम् ।
प्रयोक्तृभिः प्रयोक्तव्यं स्त्रीणां चेष्टितमन्यथा ॥

मार्दवलीलाप्रधानैरङ्गविक्षेपैरिति तत्र तथा सिद्धत्वं हेतुमाह—करपादाङ्गसञ्चार इति । तुर्हेतौ । आलिङ्गनेन गात्राणामिति । स्वात्मीयानामेवान्योन्यमासे······ णेत्यर्थः । क्रोधस्त्वभिनयेदिति व्यभिचरितः प्राप्तिमिति मन्तव्यम् । रसेषु हि

---

1. NS. धैर्यलीलाङ्गहारं स्यात्पुरुषाणां तु चेष्टितम् ।
2. NS. हारं च ।
3. NS. करपादाङ्गसंचारः ।
4. NS. सललितो भवेत् । KSS. तु ललितो भवेत् ।
5. NS. सुधीरस्तु ततोऽपि स्याद्व्यापारः पुरुषाश्रयः ।
6. KSS. प्रकीर्तितः ।
7. KSS. does not read.
8. KSS. शब्दार्थाभिनयः ।
9. KSS., NS. भावसंयुक्तं ।
10. KSS. तथाल्पकथनाच्चापि हर्षं संयोजयेत् बुधः ।
11. KSS., NS. क्षिप्रं सञ्जातरोमाञ्चा ।
12. KSS. नेत्रं च ।

निश्वासकम्पितांगश्च क्रोधं चाभिनयेन्नरः[1] ।
[2]नेत्राभ्यां बाष्पपूर्णाभ्यां चिबुकौष्ठप्रकम्पनात् ।।५५।।
[3]शिरसः कम्पनाच्चैव भ्रकुटीकरणेन[4] च ।
मौनेनागुलिभंगेन[5] माल्याभरणवर्जनात् ।।५६।।
आयतस्थानकस्थाया ईर्ष्या क्रोधे[6] भवेत्स्त्रियाः ।
निश्वासोच्छवासबहुलैरधोमुखविचिन्तनैः ।।५७।।
[7]आकाशवचनाच्चापि दुःखं पुंसां तु योजयेत् ।
रुदितैः [8]श्वसितैश्चैव शिरोभिर्हननेन च ।।५८।।
[9]भूमिपाताभिघातैश्च दुःखं स्त्रीषु प्रयोजयेत् ।
[10]आनन्दजं चार्तिजं वा ईर्ष्यासंभूतमेव वा ।।५९।।
[11]यत्पूर्वमुक्तं रुदितं तत्स्त्रीनीचेषु योजयेत् ।
[12]संभ्रमावेगचेष्टाभिश्शस्त्रसंपातनेन च ।।६०।।
पुरुषाणां भयं कार्यं धैर्यवेगबलादिभिः[13] ।
[14]चलतारकनेत्रत्वाद्गात्रैः स्फुरितकम्पितैः ।।६०।।

---

सामान्याभिनयः श्रृङ्गारद्वारेण दर्शितः अत्र तु व्यभिचारिषु दर्श्यंते । दुःखमिति शोकः भूम्यां हस्ताभ्यां च ये घाता हस्तताडनानि तथाभूतैर्हस्ताभ्यां घातास्तैराकाशस्येति शून्योऽप्यवलम्बनप्रवृत्तेत्यर्थः । विलग्नं कलासंकथितानि

---

1. KSS. बुधः ।
2. KSS. वाष्पपूर्णैः क्षणच्चैव ।
3. NS., शिरः कम्पाद्भृकुट्या च नेत्रस्याञ्जनेन च ।
4. KSS. भ्रुकुटीदर्शनेन ।
5. KSS. भागेन ।
6. NS. ईर्ष्याकोपो ।
7. KSS. आकाशवीक्षणात् । NS. आकार्यवाञ्छनाच्चापि ।
8. KSS. स्मितैश्चैव उरोभिहननेन ।
9. KSS. भूमिघाताभिधातैश्च । NS. भूमिहस्ताभिस्वेदु(?)देवं ।
10. KSS. आनन्दाश्रु समुत्पन्नं ईर्ष्यासम्भव एव वा । NS. आनन्दं चार्तिरभवमीर्ष्यासंभवमेव च ।
11. NS. मूर्खमुक्तं रुदितं । KSS. यत्पूर्वमुक्तं सहितं ।
12. NS. भ्रंशमावेगचेष्टाभिः ।
13. NS. धैर्याय शबलादिभिः । KSS. धैर्योद्वेगबलादिभिः ।

सन्त्रस्तहृदयत्वाच्च [1]पार्श्वाभ्यामवलोकनैः ।
[2]भर्तृ रन्वेषणाच्चैवमुच्चैराक्रन्दनादपि[3] ॥६२॥
[4]प्रियस्यालिंगनाच्चैव भयं कार्यं भवेत्स्त्रियाः ।
[5]मदा येऽभिहिताः पूर्वं ते स्त्रीनीचेषु योजयेत् ॥६३॥
मृदुभिः [6]स्खलितैर्नित्य[7]माकाशस्यावलंबनात् ।
नेत्रावघूर्णनैश्चैव [8]सालस्यैः कथितैस्तथा ॥६४॥
गात्राणां कम्पनैश्चैव मदः कार्यो भवेत्स्त्रियाः ।
अनेन विधिना कार्यः प्रयोगाः [9]कारणोत्थिताः ॥६५॥
पौरुषः स्त्रीकृतो वापि भावा ह्यभिनयं प्रति ।
सर्वे सललिता भावास्त्रीभिः कार्याः प्रयत्नतः[10] ॥६६॥
[11]धैर्यमाधुर्यसंपन्ना भावाः कार्यास्तु पौरुषाः ।
त्रिपताकांगुलीभ्यां तु [12]वलिताभ्यां प्रयोजयेत् ॥६७॥
[13]शुकाश्च शारिकाश्चैव सूक्ष्मा ये चापि पक्षिणः ।
[14]शिखिसारसहंसाद्याः स्थूला येऽपि स्वभावतः ॥६८॥

---

चलिताभ्यामिति मन्थरं चरं चरन्तीत्यारेचितकैरङ्गहारैरिति तुर्याध्यायनिरूपितैर्गतिप्रचारैरिति तदुचितैरेव शिरोग्रीवादिकर्मभिः भयोद्वेगौ स्त्रीनीचानां

---

1. NS. पार्श्वाभ्यां तु ।
2. KSS. भ्रातुः NS. शत्रु ।
3. KSS., NS. क्रोशनात् ।
4. KSS., NS. पुरुष ।
5. NS. मया ।
6. KSS. ललितैः कार्यं ।
7. KSS., NS. आकारस्य ।
8. NS. विलग्नैः । KSS. विलापकदितैः ।
9. KSS. करणोत्थितः ।
10. NS. स्त्रीणां कार्याः प्रयोक्तृभिः (प्रयोगतः) ।
11. NS. वीर्यं ।
12. NS. मिलिताभ्यां KSS. चलिताभ्यां ।
13. NS. शुकसारिकानुष्ठानान्सूक्ष्मानन्यांश्च पक्षिणः ।
14. NS. शिखिनः सारसा हंसाः स्थूला येन्ये च पक्षिणः।

[1]रेचकैरंगहारैश्च तेषामभिनयो भवेत् ।
[2]खरोष्ट्राश्वतरासिंहव्याघ्रगोमहिषादयः ॥६९॥
[3]गतिप्रचारैरंगैश्च तेऽभिनेयाः प्रयोक्तृभिः ।
भूताः पिशाचा यक्षाश्च दानवाः सहराक्षसैः ॥७०॥
अंगहारैर्विनिर्देश्या नामसंकीर्तनादपि ।
अंगहारैर्विनिर्देश्या अप्रत्यक्षा भवन्ति ये ॥७१॥
प्रत्यक्षास्त्वभिनेतव्या भयोद्वेगैः सविस्मयैः ।
[4]देवाश्च चिह्नैश्च प्रणामकरणैर्भावैश्च विचेष्टितैः ॥७२॥
[5]अभिनेयो ह्यर्थवशादप्रत्यक्षाः प्रयोगज्ञैः[6] ।
[7]सव्योत्थितेन हस्तेन ह्यरालेन शिरः स्पृशेत् ॥७३॥
[8]नरेऽभिवादनं ह्येतदप्रत्यक्षे विधीयते ।
खटकावर्धमानेन [9]कपोताख्येन वा पुनः ॥७४॥
[10]दैवतानि गुरूंश्चैव प्रमदाश्चाभिवादयेत् ।
दिवौकसश्च ये पूज्याः [11]प्रत्यक्षाश्च भवन्ति ये ॥७५॥

---

राक्षसादिदर्शने विस्मयस्तूत्तमानाम् । अत्र च भावादिगता अनुभावाः········ दिशद्भिरुक्ता भावैः·········यथा गदतो रुद्रस्य रौद्राभिनयस्य चेष्टितानि यथा

---

1. NS. पक्षाङ्गहारैर्विविधैस्तेऽभिनेयाः प्रयोक्तृभिः ।
2. KSS. खरोष्ट्राश्चेभसिंहाश्च । NS. खरोष्ट्रगोश्वाश्वतरान् सिंह-व्याघ्रगजादिकान् ।
3. NS. महापशूनङ्गहारैर्गतिभिश्च प्रयोजयेत् ।
4. KSS., NS. कर्म ।
5. KSS. देवाः प्रमाणकरणैर्भावैश्चापि विचेष्टितैः NS. देवाः प्रमाण-करणैर्भावैश्च विचेष्टितैश्च ललितैश्च ।
6. KSS. चिह्नैरभिनेया NS. अर्थवशादभिनेया ।
7. NS. प्रयोगेषु ।
8. KSS. पार्श्वोत्थितेन NS. भयोत्थितेन ।
9. KSS. नराभिवादनं ।
10. NS. नखटाख्येन ।
11. KSS. देवताभिर्गुरुंश्चैव प्रमदाभिश्च वादयेत् ।
12. NS. अप्रत्यक्षाश्च ।

[1]तान् प्रमाणैः प्रभावैश्च गम्भीरार्थैश्च योजयेत् ।
महाजनं [2]सखीवर्गं विटधूर्तंजनं तथा ॥७६॥
परिमण्डलसंस्थेन[3] हस्तेनाभिनयेन्नरः ।
पर्वतान् प्रांशुयोगेन वृक्षांश्चैव समुच्छ्रितान् ॥७७॥
प्रसारिताभ्यां बाहुभ्यामुत्क्षिप्ताभ्यां प्रयोजयेत् ।
समूहसागरं सेनां बहुविस्तीर्णमेव च ॥७८॥
पताकाभ्यां तु हस्ताभ्यामुत्क्षिप्ताभ्यां[4] प्रदर्शयेत् ।
[5]शौर्यं धैर्यं च गर्वं च दर्पमौदार्यमुच्छ्रयम् ॥७९॥
ललाटदेश[6]स्थानेन त्वरालेनाभिदर्शयेत् ।
वक्षोदेशादपाविद्धौ[7] करौ तु मृगशीर्षकौ ॥८०॥
[8]विस्तीर्णप्रद्रुतोत्क्षेपौ योज्यौ यत्स्यादपावृतम् ।
अधोमुखोत्तानतलौ हस्तौ किञ्चित्प्रसारितौ[9] ॥८१॥
कृत्वा त्वभिनयेद्वेलां विलद्वारं गृहं गुहाम् ।
[11]कामं शापग्रहग्रस्तान् ज्वरोपहतचेतसः[12] ॥८२॥
[13]एतेषां चेष्टितं कुर्यादंगाद्यैः सवृशैर्बुधैः ।

रुद्रस्य संचिह्नानि यथास्य त्रिशूलं परिमण्डलत्वेन सम्यग् ज्ञातं यस्येति प्रकरणादत्र पताक एव विशेषो मन्तव्यः। अङ्गाद्यैरिति । आदिग्रहणाददृष्टि-सात्त्विकपरिग्रहः । सदृशैरिति डोलाहस्तादिरूपैः । विलोलनैरिति चञ्चलैरिति

1. NS. प्रणामैश्च प्रभावैश्च गभीरार्थे प्रयोजयेत् ।
2. KSS., NS. सखिजनं ।
3. KSS., NS. संज्ञेन ।
4. KSS., NS. विक्षिप्ताभ्यां ।
5. KSS. ततः शौर्यञ्च दर्पञ्च । NS. धैर्यं शौर्यं च दर्पं ।
6. KSS. संस्थेन हस्तौ किंचित् प्रसारितौ। NS. संस्थेन ह्यरालेन विनिर्दिशेत् ।
7. NS. अपावृत्तौ KSS. does not read वक्षोदेशाद्······प्रसारितौ ।
8. KSS., NS. विस्तीर्णाय द्रुतक्षिप्तौ ।
9. NS. प्रदर्शयेत् ।
10. KSS. कृत्वा निदर्शयेत्तत्तद् गृहध्वान्तं विलं गुहाम् (NS. प्रदर्शयेत्तद्वत्) ।
11. KSS. कामपाशगृहग्रस्ता ।
12. KSS., NS. मानसाः ।
13. KSS. तेषामभिनयः कार्यो मुखमात्रविचेष्टितैः । NS. एवंविधा नरा ये च तेषां कार्यं विचेष्टितैः ।

दोलाभिनयनं कुर्याद्दोलायास्तु विलोलनैः[1] ॥८३॥
संक्षोभेण च गात्राणां रज्वश्वाग्रहणेन च[2] ।
[3]यदा चांगवती डोला [4]प्रत्यक्षा पुस्तजा भवेत् ॥८४॥
[5]आसनेषु प्रविष्टानां कर्तव्यं तत्र डोलनम् ।
आकाशवचनानीह वक्ष्याम्यात्मगतानि च ॥८५॥
अपवारितकं चैव जनान्तिकमथापि च ।
[6]दूरस्थाभाषणं यत्स्यादशरीरनिवेदनम्[7] ॥८६॥
परोक्षान्तरितं वाक्य[8]माकाशवचनं तु तत् ।
तत्रोत्तरकृतैर्वाक्यैः संलापं संप्रयोजयेत् ॥८७॥
नानाकारणसंयुक्तैः [9]काव्यभावसमुत्थितैः ।
[10]हृदयस्य वचो यत्तु तदात्मगतमिष्यते ॥८८॥
[11]सवितर्कं च तद्योज्यं प्रायशो नाटकादिषु ।

---

भावः । अथ वाचिकप्रसंगाच्चित्राभिनयं वक्तुं प्रतिजानीते आकाशवचनानी-त्यादि । दूरस्थेन रङ्गमप्रविष्टेनैव पात्रेण सहाभाषणमत एवाह अशरीरं यन्नि-वेदनमिति । परोक्तेन प्रविष्टपात्रसंवन्धिन्यान्तर्हितं व्यवहितम् । नन्वप्रविष्टस्य संवन्धिवचनं केनोदीर्यत इत्याशंक्याह—तत्रोत्तरकृतैरिति । उत्तरत्वेन यानि कृतानि वाक्यानि "मैवं ब्रवीषि" इति तैः प्रयोजयेदिति प्राक् प्रविष्टस्यैव पात्रस्य कर्तृत्वं परक्तवचनमनुभाषणच्छायाप्रविष्ट एवं ब्रूयादिति तात्पर्यम् ।

---

1. NS. दोलानां त्ववदोलनैः ।
2. KSS. रज्ज्वाः प्रग्रहेण च । NS. रज्जुप्रग्रहणेन च ।
3. KSS. तदा कम्पवती दोला ।
4. KSS., NS. भवेत् प्रत्यक्षसंश्रया ।
5. NS. आसनैरुपविष्टानां कार्यं तत्रापि दोलनन् ।
6. NS. दूरस्थान्वेषणं ।
7. NS. निवेशनम् ।
8. NS. यच्चापि ।
9. NS. रस ।
10. NS. हृदयस्थं स वै ।
11. KSS., NS. do not read.

निगूढभावसंयुक्त[1]मपवारितकं स्मृतम् ॥८९॥
कार्यवशादश्रवणं पार्श्वगतैर्यज्जनान्तिकं तत्स्यात् ।
हृदयस्थं सविकल्पं भावस्थं चात्मगतमेव ॥९०॥
[2]इति गूढार्थयुक्तानि वचनानीह नाटके ।
[3]जनान्तिकानि कर्णे तु तानि योज्यानि योक्तृभिः ॥९१॥
[4]पूर्ववृत्तं तु यत्कार्यं भूयः कथ्यं तु कारणात् ।
[5]कर्णप्रदेशे तद्वाच्यं मागात्तत्पुनरुक्तताम् ॥९२॥
अव्यभिचारेण[6] पठेदाकाशजनान्तिकात्मगतपाठ्यम् ।
प्रत्यक्षपरोक्षकृतानात्मसमुत्थान् परकृतांश्च ॥९३॥
हस्तमन्तरितं कृत्वा त्रिपताकं प्रयोक्तृभिः ।
जनान्तिकं प्रयोक्तव्यमपवारितकं तथा[7] ॥९४॥
[8]स्वप्नायितवाक्यार्थस्त्वभिनेयो न खलु हस्तसंचारैः ।
[9]सुप्ताभिहितैरेव तु वाक्यार्थैः सोऽभिनेयः स्यात् ॥९५॥

---

निगूढभावो निगूढनं सर्वेषां यन्निगूह्यते एक एव शृणुयादिति तदपवारितं जनान्तिकं एकान्तिकत्वं चैकस्यैव निगूह्यत इति विशेषः ॥

अन्ये त्वाहुः । उभयमित्येतज्जनान्तिकमेव । यावतो हि जनस्य तद्वक्तव्यं तावतोऽन्तिके सामीप्ये तदुच्यते । अपवारितकं तु तदुच्यते यत्र तूह्यात्पर-मुद्दिश्य नोच्यते । अथ च परः शृणोत्वित्ययमेवाशयो वचने तदपवारितकं तेन

---

1. KSS. संसक्तं ।
2. KSS., NS. यानि गुह्यार्थं ।
3. KSS. कर्णे निवेद्यमेवमेवमित्यभिधाय च ।
4. NS. सकृदुक्तं तु यत्कार्यं भूयः कस्मात् ।
5. NS. तत्कर्णे श्रावयेद्येन न याति पुनरुक्तताम् ।
6. KSS., पदैराकाशजनान्तिकात्मगतवाक्यैः NS. यावदाकाशजनं निका-गत्मगतपाठात् ।
7. इतोऽग्रे श्लोकपञ्चकं KSS., NS. पुस्तकयोरधिकं दृश्यते ।
8. KSS. स्वप्नायितेषु भावाः कर्तव्याः ।
9. KSS. सत्त्वाभिनयेनैन वाक्यार्थेनैव ते साध्याः ।

मन्दस्वरसञ्चारैर्व्यक्ताव्यक्तं [1]पुनरुक्तवचनार्थम् ।
पूर्वानुस्मरणकृतं कार्यं स्वप्नाञ्चिते पाठ्यम् ॥९६॥
प्रशिथिलगुरुकरुणाक्षरघण्टानुस्वरितवाक्यगद्गदजैः ।
[2]हिक्काश्वासोपेतां काकुं कुर्यान्मरणकाले ॥९७॥
हिक्काश्वासोपेतां [3]मूर्च्छोपगमे मरणवत्कथयेत् ।
अतिमत्तेष्वपि कार्यं तद्वत्स्वप्नायिते यथा पाठ्यम् ॥९८॥
वृद्धानां योजयेत्पाठ्यं गद्गदस्खलिताक्षरम्[4] ।
[5]असमाप्ताक्षरं चैव बालानां तु कलस्वनम् ॥९९॥
[6]नानाभावोपगतं मरणाभिनये बहुकीर्तितं तु ।
विक्षिप्तहस्तपादैर्निभृतैः सन्नैस्तथा कार्यम्[7] ॥१००॥
व्याधिप्लुते च मरणं निषण्णगात्रैस्तु संप्रयोक्तव्यम् ।
हिक्काश्वासोपेतं [8]तथा पराधीनमात्रसंचारम् ॥१०१॥

---

निगूढेन भावेनाशयेन संयुक्तमव्यभिचारेणेत्युक्तपूर्वं कालादिसर्वमत्रानुसरेदिति यावत् । न खल्विति । न तत्र हस्ताभिनय इत्यर्थः । सुप्ताभिहितैरित्युक्तं तानि लक्षणतः कथयति मन्दस्वरसंचारैरित्यादि । पूर्वानुस्मरणेन कृतं प्रयुक्तं प्रशिथिलानि स्वस्थानतो भ्रंशमानानि गुरूणि स्वकर्माण्यचतुराणि यानि जिह्वाग्रोपाग्रमध्यमूलानि तेषां संबन्धीनि यान्यक्षराणि तथा ते चलद्घण्टावदनुकरणं प्रधानं यद्वाक्यं तत्र यो गद्गदस्वरभेदः ततो ये जातास्तारमन्द्रादयः उदात्तानुदात्तादयश्च तैरुपलक्षितां मरणकाले काकुं कुर्यादिति संबन्धः । कलस्वनमिति मधुरस्वरम् ।

---

1. KSS., NS. द्विरुक्तं ।
2. NS. कास ।
3. KSS. मनवेक्षितमूर्च्छनं मरणम् ।
4. NS. सलिलाक्षरम् ।
5. NS. अस्पष्टवर्णसंयुक्तं ।
6. KSS. कथनीयो नानाभावतो ।
7. KSS. गात्रैः ।
8. KSS. मनवेक्षितगात्रसंचारम् ।

[1]विषपीतेऽपि च मरणं कार्यं विक्षिप्तगात्रकरचरणम्[2] ।
विषवेगसंप्रयुक्तं विस्फुरितांगक्रियोपेतम् ॥१०२॥
प्रथमे [3]वेगेकार्श्यं त्वभिनेये वेपथुर्द्वितीये तु ।
दाहस्तथा तृतीये विलल्लिका स्याच्चतुर्थे तु ॥१०३॥
फेनस्तु पञ्चमस्थे तु ग्रीवा षष्ठे तु भज्यते ।
[4]जडता सप्तमे तु स्यान्मरणं त्वष्टमे भवेत् ॥१०४॥
तत्र प्रथमवेगे तु क्षामवक्त्रकपोलता ।
कृशत्वेऽभिनयः कार्यो वाक्यानामल्पभाषणम् ॥१०५॥
सर्वांगवेपथुं च कण्डूयनं तथागानाम्[5] ।
विक्षिप्तहस्तगात्रं दाहं चैवाप्यभिनयेत्तु[6] ॥१०६॥
उद्वृत्तनिमेषत्वादुद्गारच्छर्दनैस्तथाक्षेपैः ।
अव्यक्ताक्षरकथनैः विलल्लिकामभिनयेदेवम् ॥१०७॥
[7]उद्गारवमनयोगैः शिरसश्च विलोलनैरनेकविधैः ।
[[8]फेनस्त्वभिनेतव्यो निःसंज्ञतया निमेषैश्च ॥१०८॥

---

एवमाकाशभाषितमात्मगतमपवारितं जनान्तिकं कर्णोक्तं स्वप्नायितोक्तम्-रणमूर्छामदभाषितं वृद्धबालोक्तमिति वचनगतं चित्राभिनयमुक्त्वा मरणप्रसङ्गेन तद्गतमपि कथयितुमाह—नानाभावोपगतमिति । विषं पीतमनेनेति विषपीतः । तत्रैतस्य दष्टकस्याप्युपलक्षणम् । विषस्य वेगाक्रमणेन धातुषु रसादिष्वोजः-पर्यन्तेषु सञ्चरणं प्रथमे वेगे यत्कृशत्वमत्राभिनयः कार्य इति संबन्धः । चलति कामिला छर्दिः प्रारम्भ इवान्तरो दाह्न वार्युद्रेकः अंसयोः कपोलाभ्यां स्पर्श-

---

1. NS. विषवेगे ।
2. NS. गात्रकरणं च ।
3. NS. योगे कार्यं ।
4. KSS. जडतां तु सप्तमे वै प्रोक्तं मरणं तथाष्टमे चैव ।
5. KSS., NS. warries absolutely.
6. NS. दाहं नाट्ये प्रयुञ्जीत ।
7. NS. वमनोद्गारनिपातैः ।
8. KSS. does not read.

[1]अंसकपोलस्पर्शः शिरसोऽथ विनामनं शिरोऽपांगः ।]

[2]सर्वेन्द्रियसंमोहाज्जडतामेवं त्वभिनयेत्तु[3] ॥१०९॥

संमीलितनेत्रत्वात् व्याधिविवृद्धौ भुजंगदशनाद्वा[4] ।

एवं हि[5]नाट्यधर्मे मरणानि बुधैः प्रयोज्यानि ॥११०॥

[6][संभ्रमेष्वथ रोषेषु शोकावेशकृतेषु च ।

यानि वाक्यानि युज्यन्ते[7] पुनरुक्तं न तेष्विह ॥१११॥

[8]साध्वहो मां च हेहेति किं त्वं मामावदेति च ।

एवंविधानि कार्याणि द्वित्रिसंख्यानि कारयेत् ॥११२॥

[9]प्रत्यंगहीनं यत्काव्यं विकृतं च प्रयुज्यते ।

न लक्षणकृतस्तत्र कार्यस्त्वभिनयो बुधैः ॥११३॥

भावो यत्रोत्तमानां तु न तं मध्येषु योजयेत् ।

यो भावश्चैव मध्यानां न तं नीचेषु योजयेत् ॥११४॥

---

संबन्धादित्यर्थः । शिरसो भङ्गो ग्रीवासन्धिविच्युतिस्ततः । पुनरुक्तं न तेष्विति दोषायेति शेषः । तदुदाहरति साध्वहो इत्यादि । तत्र शब्दपुनरुक्तं साधुसाध्वित्यादि । अर्थपुनरुक्तमहो साधु भद्रं चेत्यादि । प्रत्यङ्गहीनमित्यादि । प्रहसनप्रधानतया यथा प्रत्यङ्गेन केनचित्संस्कारांशेनाहीनं कार्यम् । अत एव विकृतत्वाद्धासप्रधानं तत्राप्यभिनयोऽप्यलाक्षणिको हासायैव यथा तथापि ।

---

1. KSS. does not read.
2. NS. सर्वेन्द्रियमूढतया ।
3. KSS., NS. प्रयुञ्जीत ।
4. KSS. दंशनाद्वा ।
5. NS. नाट्ययोगे ।
6. संभ्रमेष्वथ इत्यारभ्य श्लोकपंचकं KSS. पुस्तके नास्ति ।
7. NS. युञ्जीत ।
8. NS. साध्वतो मुञ्च हा हेति किं किं या या वदेति च । एतानि वचनानीह.........।
9. NS. प्रत्यंगृहीतं ।

पृथक् पृथग्भावरसैरात्मचेष्टासमुत्थितैः ।
ज्येष्ठमध्यमनीचेषु [1]नाट्यं रागं हि गच्छति] ॥११५॥
[2]एतेऽभिनयविशेषाः कर्तव्याः सत्त्वभावसंयुक्ताः[3] ।
अन्ये तु लौकिका ये तु ते सर्वे लोकवत्कार्याः[4] ॥११६॥
नानाविधैर्यथा पुष्पैर्मालां[5] ग्रथ्नाति माल्यकृत् ।
अंगोपांगै रसैर्भावैस्तथा नाट्यं प्रयोजयेत् ॥११७॥
या यस्य लीला नियता गतिश्च
[6]रंगप्रविष्टस्य निधानयुक्तः ।
तामेव कुर्यादविमुक्तसत्त्वो
यावन्नरांगात्प्रतिनिवृ तः स्यात्[7] ॥११८॥

अथ सर्वानुग्राहकं सामान्यलक्षणमाह—भावो य उत्तमानामित्यादि । रागं गच्छतीति । सर्वस्य रञ्जकं भवतीति यावत् । सामान्याभिनयशेषत्वं तदुक्तार्थात्तन्मुखेनोपसंहारदिशा चित्राभिनयस्य दर्शयति एतेऽभिनय-विशेषा इति । सत्त्वभावसंयुक्ता इत्यनेन सत्त्वातिरिक्तोऽभिनय इत्यादि स्मरति । नानाविधैरित्यभिनयानां समानीकरणं चित्रत्वं च दर्शितम् । क्रमा-त्क्रमं श्रमवशादुपचितत्वपरित्यागः प्रयत्नेन परिरक्ष्य इत्येतत्तात्पर्येण श्लोकं पठति या यस्य लीला नियता गतिश्चेति । विमुक्तसत्त्वो त्यक्तावष्टंमं प्रति निवृ त इति निवृ त्तिर्वक्ष्यते इति । वृत्तो विषयाज्जनादेर्निवर्तते । तेन

1. NS. भवेन्नाट्ये तु रागकृत् ।
2. NS. अभिनयपरिशेषाः ।
3. NS. सर्वभावसंयुक्ताः । KSS., सत्त्वभावयुक्ताः स्युः ।
4. KSS., NS. लोकतः साध्याः ।
5. KSS., NS. माल्यं ।
6. NS. रङ्गप्रवृत्तस्य ।
7. KSS., NS. यावन्न रङ्गात्प्रतिनिःसृतः स्यात् ।

एवमेते मया प्रोक्ता [1]नाट्ये चाभिनयाः क्रमात् ।
[2]अन्ये तु लौकिका ये ते लोकाद्ग्राह्याः सदा बुधैः ॥११९॥
लोको वेदस्तथाध्यात्मं प्रमाणं त्रिविधं स्मृतम् ।
[3]वेदाध्यात्मपदार्थेषु प्रायो नाट्यं प्रतिष्ठितम्[4] ॥१२०॥
[5]वेदाध्यात्मोपपन्नं तु शब्दच्छन्दस्समन्वितम् ।
लोकसिद्धं भवेत्सिद्धं नाट्यं लोकात्मकं तथा[6] ॥१२१॥

---

रङ्गाद्यावन्निर्वृतो निष्क्रान्तः स्यादित्यर्थः । किमेतावानभिनयप्रकारः नेत्याह अन्ये तु लौकिका इति । ननु किमत्र लोकः प्रमाणमित्याशंक्याह—लोको वेदस्तथाध्यात्ममिति । लोकसिद्धानि प्रत्यक्षानुमानागमप्रमाणानि लोकशब्देनोच्यन्ते । वेद इति तु यथास्वं नियतरूपो लोकप्रसिद्धोऽप्यागमो यथा न्यायेषु धनुर्वेदः स्वरतालादो गान्धर्ववेद इत्यादि । अध्यात्मं तु संस्थं वेदनं वेदाध्यात्माभ्यां प्रमिता ये पदार्थाः तेषु नाट्यं प्रतीतमित्यत्र हेतुमाह वेदाध्यात्मोपपन्नं त्विति । तुर्हेतौ । समन्वितमिति भावे । एतदुक्तं शब्दसमन्वयो व्याकरणाभिधानेनागमेन सिद्धः । छन्दस्समन्वयस्तु स्वसंवेदनेन । श्रव्यता हि तद्विदा स्वसंवित्तिसिद्धावृत्तेषु प्रगीतानामिव रागभाषादीन् नीयते । एतच्चागमस्ववेदनयोः प्रमोपलक्षणमात्रं । अथ लोकं प्रमाणयितुमाह—यल्लोकसिद्धमिति । यल्लोके सिद्धं तत्सिद्धं न । तत्कस्यचिदसिद्धमिति यावत् । न हि लोकप्रसिद्धिमपह्नोति कश्चित्समर्थः । सुविप्रतिपन्नस्यापि तदपह्नवे काष्ठपाषाणतापत्तिप्रसंगात् । तथेति । तत एव प्रकाराद्धेतोर्लोकात्मकं लोकानुकीर्तनरूपं नाट्यमित्युक्तम् ।

---

1. KSS., वागङ्गाभिनयाः क्रमात् । NS. भावाः ह्यभिनयं प्रति ।
2. KSS., नोक्ता ये च मया तत्र लोकाद्ग्राह्यास्तु ते बुधैः । NS. नोक्ता येऽपि तु तेऽप्यत्र लोकादग्राह्यास्तु पण्डितैः ।
3. NS. लोकाध्यात्म……।
4. NS. व्यवस्थितम् ।
5. NS. तदध्यात्माभिसंभूतं ।
6. KSS., लोकस्वभावजम् । NS. लोकात्मकं त्विदम् ।

[1]न च शक्यं हि लोकस्य स्थावरस्य चरस्य च।
शास्त्रेण [2]निर्णयं कर्तुं भावचेष्टाविधिं प्रति ॥१२२॥
नानाशीलाः प्रकृतयः शीले नाट्यं प्रतिष्ठितम्।
तस्माल्लोकप्रमाणं हि [3]विज्ञेयं नाट्ययोक्तृभि[4]: ॥१२३॥
[5]एतान् विधींश्चाभिनयस्य सम्य-
[6]ग्विज्ञाय रंगे मनुजः प्रयुंक्ते।
स नाट्यतत्त्वाभिनयप्रयोक्ता
संमानमग्र्यं लभते हि लोके ॥१२४॥

---

ननु लोकेन च यत्प्रत्ययं तदागमेनैव प्रमितम्। तत्किं पुनर्लोकेनोक्तेनेत्याशङ्क्याह—न शक्यो लोकस्येति। शीलः स्वभावः। प्रकृतनुपसंहरति तस्माल्लोकप्रमाणं हि विज्ञेयमिति। एतान् विधीनिति। सामान्याभिनयात् प्रभृत्येवदध्यायपर्यन्तं ये कर्तव्यतारूपाभिनयानां विधय उक्ताः तान् सम्यग् विज्ञायेति वदन् कोहलादिशास्त्रलक्ष्यप्रवाहसिद्धमपि चित्राभिनयं सूचयति। ततश्चोदाहरणार्थान् दर्शयामो माभूत्सम्प्रदायप्रवाहविच्छेद इति।

मुख्याभ्याशे हंसपक्षात्स्कन्दो वा शक्तिदर्शनात्।
संमुखौ खटकौ पार्श्वद्वये शार्ङ्गिनिरूपणम् ॥

---

1. इतः पूर्वं देवतानामृषीणां च इत्यादि श्लोकचतुष्टयं क—न पुस्तकयोरधिकं दृश्यते।
2. NS. नियमं कर्तुं नानाचेष्टाविधिं।
3. KSS. कर्त्तव्यं। NS. ज्ञेयं नाट्यं प्रयोक्तृभिः।
4. KSS. reas here an additional verse एवं भावानुकरणे इत्यादि।
5. KSS. येऽभिक्रमैर्योभिनयं तु सम्यक्। NS. नाट्यप्रकाराः कथिता मयैते।
6. विज्ञाय सम्यक् मनुजैः प्रयोज्याः।
नाट्यस्य तत्त्वानुगतः प्रयोगः संमानमग्र्यं लभते हिरण्यम्।

लीलालोकितसंदंशयुग्मेन कुसुमायुधम् ।
रुद्रवद्रूपयेद्दुर्गां चतुरेण सरस्वतीम् ॥
.................खटकेन तथा श्रियम् ।
गौरीं च दंष्ट्रया देवीं वाराहीमिति मातरः ॥
प्रदर्श्यात्तत्तदुचितब्राह्म्यादिगतलक्षणैः ।
सूचीहस्ताङ्गुलिकाद्रिनन्दिनीस्यान्नयोन्नता ॥
तत्प्रोत्तानाधोमुखेन त्रिपताकामुखेन तु ।
गङ्गा तथैव चतुरेणान्या सर्पशिरोद्वयम् ॥
उपर्युपरि डोलं स लेतिर्यग्विलोलितः ।
अरालत्रिपताकौ च पताकद्वयकम्पनम् ॥
अञ्च···पुष्पपुटास्त्रिपताकौ तपस्विनाम् ।
प्रसृतोर्ध्वपराचीनौ शिखरौ बाह्यदन्तरे ॥
कूर्परोर्ध्वस्थितेनापि त्रिपताकेन योषितः ।
पार्श्वेऽर्धकटकेन स्याल्लोकपालास्सलक्ष्मभिः ॥
स्तब्धकार्यो मुक्तहस्तौ जिनं विद्याधरान् प्रजाः ।
अग्निना वाथ रक्षांसि नष्टं या सूचिकामुखात् ॥
विद्यात्तु त्रिपताकाभ्याम्मूर्ध्नि राजप्लवङ्गमान् ।
पताकाभ्यामथो सर्पशिरोभ्यां स्वस्तिकस्थितेः ॥
धर्मं सितादिभिश्चाहीनृतवो मणयः पुनः ।
···काङ्गुलेन रिपुन्नाथ ग्रन्थतर्जनिकेऽङ्गना ॥
कूर्पराकुञ्चितां कम्प्रपताकाभ्यां च सारसः ।
प्रसारितं च बाहुभ्यां वृश्चिकस्थलपक्षिषु ॥
भृङ्ग्यां च मध्यमाङ्गुष्ठपताकामस्तकोपरि ।
उत्क्षेपादञ्चितस्यांघ्रि नतोन्नतकरद्वयात् ॥

[1]एवमेते ह्यभिनया वाङ्नेपथ्यांगसंभवाः ।
प्रयोगज्ञेन कर्तव्या नाटके सिद्धिमिच्छता ॥१२५॥
इति भरतीये नाट्यशास्त्रे चित्राभिनयो नाम
[2]पञ्चविंशोऽध्यायः ॥

---

गरुडं चतुराभ्यां तु कण्डमूलोभयादधः ।
पताककूर्परे कुञ्च्य चालीढो क्रोधरूपणे ॥
मुखान्तिके तर्जनीं तु विश्लिष्टां वाक्यरूपणे ।
चूडायां मूर्ध्न्युपाङ्गेषु स्त्रीविषादे तथोद्वहम् ॥
वक्षः पार्श्वान्नूर्ध्वतः खं पताकस्वस्तिकेन तु ।]
तथा प्रभातहस्ताभ्यामावेगोद्वर्तिताङ्गुलिः ॥
पराङ्मुखाभ्यां रात्रिर्वा पताकस्वस्तिकादिभिः ।
मुखाच्छादात्स्खलत्यादौ शलभाधूलिधूम्रकः ॥
पताकेनोरसि सुहृदरालेन सुतादयः ।
निधिमाकुञ्चिते वामकूर्परे भूधरादिषु ॥
उत्तानं च शिरस्तेषां भेदास्तु न निरीक्षणात् ।
वामकस्त्रिपताकः स्यात् कण्ठमूलोऽपरोऽपरः ॥
करिणीं गण्डविचलञ्चतुराभ्यां मदाश्रिताम् ।
पद्मोर्णनाभमुकुलैः स्वस्तिकैर्वृश्चिकेन तु ॥
सिंहगोमायुशरभा यथास्वं दृष्टिभेदतः ।
ललाटे सर्पशिरसा खड्गि श्रवणमूलतः ॥

---

1. KSS. ज्ञेयास्त्वभिनया ह्येते वाङ्नेपथ्याङ्गसंश्रयाः। NS. does not read this.
2. KSS. षड्विंशः ।

खङ्गिकास्त्री तथान्यच्च शिखरं स्यात्प्रसारितम् ।
मुष्टिर्मल्लस्य शल्यश्च खटकेन हृदन्तरे ।।
संदंशेन मतिर्नभिरुद्यता वक्षसि स्थितिः ।
पल्लवेन स्वमूर्धानं स्पृशता स्वेचरानतिः ।।
पराङ्मुखपताकाभ्यां मुखे स्वस्तिकविच्युते ।
कवाटाभ्यां करिघटान्मोक्षं (?) च करयुग्मतः ।।
मृगशीर्षे कनिष्ठायां निर्देशश्चतुरेण वा ।
चलः सूच्यास्वयुगलं हृयसैन्येदृशान्वितम् ।।
शूलपाण्यादिशब्देषु केचिद्वर्तिपदाश्रितम् ।
कुब्जन्त्वभिनयन्त्यन्ये विशेष्येऽन्यद्द्वयाश्रितम् ।।
अव्याहृतायां वाक्यार्थप्रतीतौ स्यात्पदेष्वथ ।
स्नानं मूर्ध्नि पताकाभ्यां शकटेऽन्योन्यसंमुखौ ।।
कूर्पराकुञ्चितौ कार्यौ त्रिपताककरेण तु ।
अयस्कारादिनिर्देशे खटकः करिविद्रवे ।।
गणेशे मुकुलास्योऽथ विक्षेपात्स्युर्मरीचयः ।
शिरसः पार्श्वयोः——त्रिपताकद्वये जटा ।।
उपर्युपरि युक्ताभ्यां शिखराभ्यां महेश्वरी ।
व्रीह्यादिचतुरेण स्यान्मुष्टिना वाथलेखकाः ।।
खटकेन तथासूकाश्शून्योत्तानोपनो (?) क्रमात् ।
अधस्खलितयोगेन चतुरेणापमीलनात् ।।
शिखरे वामकेऽधस्तः पताकस्थेन दक्षिणे ।
सङ्गतौ खटकौ सूर्ये सारथौ पृष्ठपूर्वगौ ।।
प्रमाणो मानपरिमाः सूची संदष्टचरालकैः ।
एलाक्रीडा धनुर्योगात् पुलिन्दाभिनयो मतः ।।

यामाद्यौ खटकारालौ समपादः कपालिनि ।
स्वन्नाहूर्ध्वे तु खटकौ पार्श्वक्षेपश्च पादगः ॥
महाभैरवनाथस्य खटकावंसजानुगौ ।
अनूर्ध्वकर्मणः पादः कर्मान्तं यदुदीरितम् ॥

तस्य स्वबुद्धया घटनं चित्राभिनयनं विदुः ।
तस्योदाहरणं किञ्चिदिदमूहाविवृद्धये ॥
मयाभिनवगुप्तेन दर्शितं धीमतः प्रति ।
यथालिखितवस्तूनां प्रतिपत्संस्थितान् प्रति ।
अपि वाचस्पतेर्वाणी कुण्ठा किमुत मादृशाम् ॥

एवं प्रमाणत्रयेणाभिनयान् विज्ञाय योगरङ्गे सभायां प्रयुङ्क्ते स एष च नाट्ये तत्त्वतोऽभिनयान् प्रयुङ्क्ते स च सम्मानं लभत इति योज्यम् । अभिनयशेषभूतोऽयमितिकर्तव्यतारूपः परस्परसंमीलनात्मा प्रयोगस्तेन च विना न काचित् सिद्धिरित्युपसंहारव्याजेनैवमिति श्लोकेनांगीशब्दस्वीकृतसात्त्विकेन दर्शयन् सामान्याभिनयनायकान् सर्वान् दर्शयति सिद्धमिति शिवम् ॥

विचित्राभिनयाध्यायः सोऽयं व्याकृतसारकः ।
कृतोऽभिनवगुप्तेन शिवानुग्रहशालिना ॥

इति श्रीमहामाहेश्वराचार्याभिनवगुप्तविरचितायां नाट्यवेद-
वृत्तावभिनवभारत्यां चित्राभिनयः
पञ्चविंशोऽध्यायः समाप्तः ॥

---

श्रीः

# नाट्यशास्त्रम्

## [1]षड्विंशोऽध्यायः

— ० —

अनुरूपा विरूपा च तथा रूपानुरूपिणी ।
त्रिप्रकारेह पात्राणां प्रकृतिश्च विभाविता ॥१॥
नानावस्थाक्रियोपेता भूमिका प्रकृतिस्तथा ।
भृशमुद्योतयेन्नाट्यं स्वभावकरणाश्रयम् ॥२॥

---

॥ अभिनवभारती—षड्विंशोऽध्यायः ॥

यस्मिन् सति प्रकृतिभूमिविकल्प एष
स्त्रैवास्य याति हृदयादरणीयभावः ।
रागः स यस्य महिमा महनीयधाम्नि
भूयात्स नित्यमपि तत्र च रागवन्तः ॥

समानीकरणलक्षणः सामान्येऽभिनयः प्रस्तुतः । तत्र यथाभिनयानामन्योन्यं समानीकरणमुपदेश्य तथाभिनेतुरभिनेयस्य च । एवं सोऽभिनेयद्वारेणाभिनयोऽभिनेत्रा समानीकृतो भवति । तदेतदिति । अभिनेत्रभिनेययोः समानीकरणं सामान्याभिनयरूपमनेन प्रकृत्यध्यायोऽभिधीयते । तदर्थसूचनायैव सङ्गतिप्रदर्शनाभिप्रायो वृत्ताध्यायपरिसमाप्तौ यः प्रयुङ्क्त इति प्रयोक्तेति प्रयोज्ञेति च निरूपितम् । स एव हि प्रयोगं जानाति यः प्रयोज्यप्रयोजकस्वरूपवित् । तत्र कृति-

---

1. KSS. चतुस्त्रिंशत्तमः । NS. षड्विंशोऽध्यायः ।
NS. varies absolutely.

बहुबाहूबहुमुखास्तथा च विकृताननाः ।
पशुश्वापदवक्त्राश्च खरोष्ट्राश्च गजाननाः ॥३॥
एते चान्ये च बहवो नानारूपा भवन्ति ये ।
आचार्येण तु ते कार्या मृत्काष्ठजतुचर्मभिः ॥४॥
स्वाभाविकेन रूपेण प्रविशेद्रंगमण्डलम् ।
आत्मरूपमवच्छाद्य वर्णकैर्भूषणैरपि ॥५॥
यादृशं यस्य यद्रूपं प्रकृत्या तत्र तादृशम् ।
वयोवेषानुरूपेण प्रयोज्यं नाट्यकर्मणि ॥६॥
यथा जीवत्स्वभावं हि परित्यज्यान्यदेहिकम् ।
परभावं प्रकुरुते परभावं समाश्रितः ॥७॥
एवं बुधः परं भावं सोऽस्मीति मनसा स्मरन् ।
येषां वागङ्गलीलाभिश्चेष्टाभिस्तु समाचरेत् ॥८॥
सुकुमारप्रयोगो यो राज्ञामामोदसंभवः ।
शृंगाररसमासाद्य तन्नारीषु प्रयोजयेत् ॥९॥
युद्धोद्धताविद्धकृता संरम्भारभटाश्च ये ।
न ते स्त्रीभिः प्रयोक्तव्याः योक्तव्याः पुरुषेषु ते ॥१०॥
अनुद्भटमसंभ्रान्तमनाविद्धांगचेष्टितम् ।

---

प्रयोज्यानुकरणीयो अनुकीर्तनीय इति पर्यायाः । तत्र प्रयोक्ता प्रयोज्यसदृशो वा भवति विसदृशो वा उभयात्मको वा । तत्र सदृशोऽनुरूपः उभयात्मरूपानुरूपः स्वलक्षणं तेना तदेतौ तवैव (?) सादृश्यं लक्षितम् । आनुरूप्यं सादृश्यात् । तदुभययोगाद्रूपानुरूपा यद्यपि कथंचित् सर्वत्रैव त्रैविध्यं संभवति । तथाप्युद्रिक्ता सकललोकसंवादिनी अस्मादृशबुद्धिर्यथा पुरुषस्य प्रयोक्तुः पुरुषेण प्रयोज्येन योषितो योषिता तत्र सदृशव्यवहारः । स्त्रिया पुरुषस्य तु कैसादृश्यं । सा सिंहवदनदशवदनादियैस्तु प्रयोज्यैरन्यसादृश्यमेव । तदपि प्रकृतित्रैविध्यं दर्शयितुमाह—अनुरूपेत्यादि । पात्राणामिति । धीयते रसो यत इत्यनेन नटबुद्धितिरोधानं

लयतालकलापातप्रमाणनियताक्षरम् ॥११॥

सुविभक्तपदालापमनिष्ठुरमकाहलम् ।

ईदृशं यद्भवेन्नाट्यं नारीभिश्च प्रयोजयेत् ॥१२॥

एवं कार्यं प्रयोगज्ञैर्भूमिकाविनिवेशनम् ।

स्त्रियो हि स्त्रीगतो भावः पौरुषः पुरुषस्य च ॥१३॥

यथा वयो यथावस्थमनुरूपेति सा स्मृता ।

पुरुषः स्त्रीकृतं भावं रूपात्प्रकुरुते तु यः ॥१४॥

रूपानुरूपा सा ज्ञेया प्रयोगे प्रकृतिर्बुधः ।

छन्दतः पौरुषीं भूमिं स्त्री कुर्यादनुरूपतः ॥१५॥

न परस्परचेष्टासु कार्यौ स्थविरबालिशौ ।

पाठ्यप्रयोगे पुरुषाः प्रयोक्तव्या हि संस्कृते ॥१६॥

स्त्रीणां स्वभावमधुराः कण्ठाः पुंसां तु बलवन्तः ।

यद्यपि पुरुषो विद्यात् गीतविधानं च लक्षणोपेतम् ॥१७॥

माधुर्यंगुणविहीनं शोभां जनयेन्न तद्गीतम् ।

---

सूचनान्नटबुद्धेरप्यपायतामाह । प्रकर्षेण क्रियते साक्षात्कारकल्पनानुव्यवसाय-गोचरत्वमीयत इति प्रकृतिः । सेयं त्रिप्रकारप्रकृतिप्रविभागेन भाविना सती नाट्यं भृशं द्योतयेदिति ज्ञानस्य प्रयोजनमुक्तम् । कुतः सामान्यं द्योतयेदिति विशेषण-द्वारेण हेतुमाह—स्वभावेति । प्रयोज्यस्वभावो हि नाट्यकर्तव्यः । तत्र सुकुमार-स्वभावे पुंसि प्रयोज्ये लालित्यसौकुमार्ये स्त्रीजनस्यायत्नसिद्धे इति स एव तत्र योक्तः युक्तो रूपानुरूपाणि वा सा तस्य प्रकृतिः, उद्धते तु प्रयोज्ये पुमानेव प्रयोक्ता युक्तः सानुरूपा प्रकृतिरूपायां तु प्रकृतौ कथञ्चित् यत्नेन संपाद्यमनु-कीर्तनमिति तत्र सावधानेन प्रतियोक्ता भाव्यम् ।

नन्वनुरूपैव प्रकृतिर्युक्तेत्याशङ्क्याह—नानेति (२श्लो)। नानाप्रकाराभिरव-स्थाभिःविलासलालित्यौद्धत्यादिभिर्धर्म्यैःक्रियाभिश्च सुकुमारोद्धतात्मिकाभिरुद्यान-

यत्र स्त्रीणां पाठ्याद्गुणैर्नराणां च कण्ठमाधुर्यम् ॥१७॥

प्रकृतिविपर्ययजनितौ विज्ञेयौ तावलंकारौ।

प्रायेण देवपार्थिवसेनापतिमुख्यपुरुषभवनेषु ॥१९॥

स्त्रीजनकृताः प्रयोगा भवन्ति पुरुषस्वभावेन।

रम्भोर्वशीप्रभृतिषु स्वर्गे नाट्यं प्रतिष्ठितम् ॥२०॥

तथैव मानुषे लोके राज्ञामन्तः पुरेष्विह।

उपदेष्टव्यमाचार्यैः प्रयत्नेनांगनाजने ॥२१॥

न स्वयं भूमिकाभ्यासो बुधैः कार्यास्तु नाटके।

स्त्रीषु योज्यः प्रयत्नेन प्रयोगः पुरुषाश्रयः ॥२२॥

यस्मात्स्वभावोपगतो विलासः स्त्रीषु विद्यते।

तस्मात्स्वभावमधुरमङ्गं सुलभसौष्ठवम् ॥२३॥

ललितं सौष्ठवं यच्च सोऽलंकरः परो मतः।

प्रयोगो द्विविधश्चैव विज्ञेयो नाटकाश्रयः ॥२४॥

---

गमनयुद्धसन्नाहनादिभिरुपेता तस्मान्नानारूपैव प्रकृतिर्युक्ता। तस्याः प्रकृतेः पर्यायेण स्वरूपं स्पष्टयति भूमिकेति। भूमिरवष्टं स्थानं। यथा च ध्यानपटगते दशभुजपञ्चवक्त्रादिरूप एव भगवति सदाशिवे धिषणानिवेशः क्रियते न तु तत्र तद्देशत्वतत्कालत्वे आदर्तव्यम्। नापि तत्सिन्दूरहरितालादिकृतं तद्द्रव्यं केवलमवष्टम्भस्थानम्। तदेवं रामादयोऽवष्टंभस्थानमात्रम्। एतच्च रसाध्यायादौ वितत्य निरूपितम्। तेन भूमिरिव भूमिका। इवार्थे अण्। अरूपायाः प्रकृतेरसंभाव्यत्वात्। तत्संपाद्यत्वाच्च पूर्वं स्वरूपमाह—बहुबाहु इत्यादि। विकृताधाराः तेष्वप्रावरणादयः पशुवक्त्रा यथा गोमुखाः अश्वमुखाः श्वापदवक्त्रः तथा सिंहवक्त्राः खरोष्ट्रेत्यादिना सर्ववपुषा तदद्रूपान् कार्यं इति। आवश्यकेनेति शेषः। अत्र हेतुमाह—स्वाभाविकेनेति। अनुकीर्तनीयस्य यःस्वभावः तदुचितेन रूपेणेति यावत्। आत्मरूपमिति। नटरूपमपिशब्दात्। मृत्काष्ठादिनिर्मितबाहुवक्त्रादिरपि। प्रवष्टम्भयोगस्य प्राधान्यं दर्शयितुमेकविंशत्यध्यायोक्तं हेतुं स्मारयति यथा-

सुकुमारस्याविद्धो नानाभावरसाश्रयः ।
नाटकं सप्रकरणं भाणो वीथ्यङ्क एव च ।।२५।।
ज्ञेयानि सुकुमाराणि मानुषैराश्रितानि तु ।
सुकुमारप्रयोगोऽयं राज्ञामामोदकारकः ।।२६।।
श्रृंगाररसमासाद्य स्त्रीणां तत्तु प्रयोजयेत् ।
युद्धोद्धताविद्धकृता संरम्भारभटाश्च ये ।।२७।।
न ते स्त्रीणां प्रकर्तव्याः कर्तव्याः पुरुषैर्हि ते ।
यथाविद्धांगहारं तु भेद्यभेद्याहवात्मकम् ।।२८।।

---

जीवस्वभावमिति। परं भावं रामादिकं वेषादिभिः समाचरेदिति संबन्धः। सोऽस्मीत्यनेन स्वात्मावष्टंभस्यात्याज्यतामाह। अन्यथा लयाद्यनुसरणमशक्यम्। अथ रूपानुरूपिणी प्रकृति क्वेत्याशंक्याह—सुकुमारप्रयोग इति । राज्ञामित्युपलक्षणम् आमोदो विभावपरिपूर्णता। तन्नारीष्विति। प्रयोक्तृषु प्रयोज्यतयात्र विषयत्वेन विवक्षितः। प्रयोजयेदिति। नाट्याचार्यः।

नन्वेवमनुरूपा पुरुषविषये प्रकृतिः किं नास्तीत्याशंक्याह—युद्धोद्धताविद्धकृताविति। प्रयोगा इति शेषः। युद्धोद्धतैराविद्धैश्च कृताः व्याप्ताः अत एव संरम्भप्रधाना आरभटादयः। स्त्रीपुरुषभूमिकेत्यस्यार्थस्य व्यापकत्वमाह अनुद्भटमिति। अनुरूपां प्रकृतिं लक्षयितुमाह—स्त्रिया हीति। प्रयोक्त्र्यानुरूपाननुरूपां लक्षयति पुरुषस्त्रीगतमिति। यत्र पुरुषत्वमालम्ब्य स्त्रीवर्तते यथा सांकृत्यायिनी। न तु सर्वत्रेत्यर्थः। स्त्रीपुरुषं प्रयुक्तमित्यतेत् सर्वत्र युक्तमिति दर्शयति छन्दत इति। स्थविरबालिशाविति। संबन्धिशब्दाः संबन्ध्यन्तरमाक्षिपन्तीति स्थविरो युवभूमिकायां युवा च वृद्धभूमिकायां न योज्यः। बालिशोऽत्र विरूपः स विरूपभूमावायोज्यः। एतच्चोपलक्षणम्। यत्र यत्प्रयोजनो न श्लिष्यति न स तत्र योज्य इत्यर्थः। पाठ्यप्रयोग इति। संस्कृतपाठ्यप्रधाने सुकुमारप्रकृतपाठ्यप्रधाने। गीत इति गीतप्रधाने प्रयोग इत्यर्थः। अत्र हेतुमाह—प्रायः प्रकृतिरिति। बलवन्त इति। रङ्गपूरणोचितगम्भीरस्वरा। ननु पुमांसोऽपि भावयन्त्येव तत्कथमुक्तं स्त्रीणां गेयं प्रकृतिरित्याशंक्याह—यद्यपि पुरुष इति।

मायेन्द्रजालबहुलं पुस्तनैपथ्यदीपितम् ।
पुरुषप्रायसंचारमल्पस्त्रीकमथोद्धतम् ॥२९॥
सात्त्वत्यारभटीयुक्तं नाट्यमाविद्धसंज्ञितम् ।
डिमः समवकारश्च व्यायोगेहामृगौ तथा ॥३०॥
एतान्याविद्धसंज्ञानि विज्ञेयानि प्रयोक्तृभिः ।
एषां प्रयोगः कर्तव्यो देवदानवराक्षसैः ॥३१॥
उद्धता ये च पुरुषाः शौर्यवीर्यसमन्विताः ।
योग्यः स च प्रयत्नः कर्तव्यः सततमप्रमादेन ॥३२॥
न हि योग्यया विना भवति च भावरससौष्ठवं किंचित् ।
संगीतपरिक्लेशो नित्यं प्रमदाजनस्य गुण एव ॥३३॥
यन्मधुरकर्कशत्वं लभते नाट्यप्रयोगेण ।
प्रमदाः नाट्यविलासैर्लभते यत् कुसुमैर्विचित्रलावण्यम् ।
कामोपचारकुशला भवति च काम्या विशेषेण ॥३४॥
गीतं नृत्तं तथा वाद्यं प्रस्तारगमनक्रिया ।
शिष्यनिष्पादनं चैव षडाचार्यगुणाः स्मृताः ॥३५॥

---

ननु विपर्ययोऽपि दृष्ट इत्याशंक्याह—तावलङ्काराविति । कदाचित्कापीति यावत् । तत्र स्त्रीपुरुषप्रयोगमनुकरोतीत्ययमेव प्रचुरः प्रकार इति दर्शयति । प्रायेणेति । पुरुषस्वभावेन प्रयोज्येनोपलक्षितोऽयं स्त्रीभिः कृताः प्रयोज्याः । अत्रानुवादं दर्शयति रंभोर्वशीप्रभृतिष्विति । अत्र हेतुमाह उपदेष्टव्यमिति । उपदेष्टुं शक्यमित्यर्थः । स्वयमिति पुरुषैः न्यासोऽत्र प्रयोगः ।

ननु पुमानपि भावबुद्धिमाश्रित्याशङ्क्य हेत्वन्तरमाह यस्मादिति । पुरुषसंबन्धिवलितं च यद्वस्तु तदतीवहृद्यं प्रतिभाति । तदाहसोऽलंकार इति । यदुक्तमनुद्भट इत्यादिना युद्धोद्धता इत्यादिना प्रयोगद्वैविध्यं तद्रूपकभेदेन विभजंस्तद्रूपके सप्रयोग उचित इति दर्शयति नाटकमित्यादिना । शौर्यवीर्यसमन्विता इत्यनेन श्लोकसप्तकेन प्रायः प्रकृतिः स्त्रीणां गेयं नृणां तु पाठ्यविधिरित्युक्तम् । तत्रायत्नसिद्धेऽर्थे को नाट्याचार्यप्रवर्तितस्य गुणनिकाभ्यासव्यापार इत्याशंक्याह—संगीतपरिक्लेश इति । मधुरत्वं स्वाभाविक

एतानि पञ्च यो वेत्ति स आचार्यः प्रकीर्तितः ।
ऊहापोहौ मतिश्चैव स्मृतिर्मेधा तथैव च ॥३६॥
मेधास्मृतिर्गुणश्लाघारागः संघर्ष एव च ।
उत्साहश्च षडेवैतान् शिष्यस्यापि गुणान् विदुः ॥३७॥
एवं कार्यं प्रयोगज्ञैर्नानाभूमिविकल्पनम् ।
अत ऊर्ध्वं प्रवक्ष्यामि सिद्धीनामपि लक्षणम् ॥३८॥

इति भरतीये नाट्यशास्त्रे विकृतिविकल्पो
नाम षड्विंशोऽध्यायः ॥

---

कर्कशत्वं सविघ्नत्वं कलाभ्यासक्तः । अथ नाट्याभ्यासप्रोत्साहनार्थमाह प्रमदाः नाट्यविलासैरिति ।

न स्वयं भूमिकान्यासो बुधैः कार्यस्तु नाटके इत्युक्तम् । तत्र नाट्याचार्यः किं बुद्धचते येन बुधा इति संशये स इत्याह गीतं नृत्तमित्यादि । स्वरज्ञोऽग्रहारक्रियापि चतुर्विधातोद्यकुशलस्तालज्ञः लोकोपकारविच्चेत्यर्थः । प्रस्तारोऽत्र तालः । गमने क्रियाङ्कस्य कीदृशी गतिरित्यनेनोपचारकौशलं तद्वक्ष्यते । एतैर्विना नाट्याचार्यनामापि न लभत इत्यर्थः । ऊहादयस्तत्पृष्ठे भवन्तस्तदुत्कृष्टं कुर्वन्तीति ते गुणा इति विभागेनोक्ता । ऊहोऽनुक्तस्य कल्पनमपोहो अनुक्तस्य अनुसरणमिति पूर्वोन्मेषरूपा प्रतिभा स्मृतिरुपदिष्टस्याविस्फुरणं मेधाः उपदिष्टस्य झटिति ग्रहणं शिष्यनिष्पादनं शिष्याशयौचित्यान्नोपदेश्यत्वं गुणप्रख्यानोद्यमः प्रगल्भते इत्यर्थः । राग इति । प्रयोजनानभिसन्धिना तत्र कलायाश्चासंघर्षाभ्यधिकं प्रतिपत्तिः स्पर्धा । एतदुपसंहरन्नध्यायान्तरमासूत्रयति एवमिति । अत ऊर्ध्वमिति चेति । सिद्धेर्द्वैविध्येऽप्यवान्तरभेदेन बहुत्वमिति सिद्धीनामित्युक्तमिति शिवम् ॥

प्रकृतिविकल्पाध्याये विषमपदालोचनं समारचितम् ।
अभिनवगुप्तेन मया विषमविलोचनपदाब्जभृङ्गेण ॥

इति श्रीमहामाहेश्वराचार्याभिनवगुप्तेन विरचितायां भारतीयनाट्यवेदवृत्तावभिनवभारत्यां प्रकृतिविकल्पाध्यायः षड्विंशः ॥

---

श्रीः

# नाट्यशास्त्रम्

## सप्तविंशोऽध्यायः

— ० —

सिद्धीनां तु प्रवक्ष्यामि लक्षणं नाटकाश्रयम् ।
यस्मात्प्रयोगः सर्वोऽयं [1]सिद्ध्यर्थं संप्रदर्शितः ॥१॥
सिद्धिस्तु द्विविधा ज्ञेया[2] वाङ्मनोंगसमुद्भवा ।
[3]दैवी च मानुषी चैव नानाभावसमुत्थिता ॥२॥

---

अभिनवभारती—सप्तविंशोऽध्यायः

सत्त्वमित्यमलरङ्गमण्डले दैवमानुषविभेदभेदिता ।
सिद्धिमानयति यः स्वविद्यया तं नमामि गिरिजार्धधारिणम् ॥

इह यो यथाभिनये यस्मिन् योक्तव्यः सिद्धिमिच्छतेति सर्वमभिनयानां तावत्सिद्धिपर्यन्तमुक्तम् । अभिनयप्रक्रमेणैवोपाङ्गाभिनयाध्याये सप्तमे । तथाभिनयसमानीकरणात्मकमेलनिका संपादनात्मकस्सामान्याभिनयस्यापि सिद्धिफलत्वमेव दर्शितम् । चित्राभिनयाध्यायान्ते "एवमेते ह्यभिनया वाङ्नैपथ्याङ्गसंभवाः । प्रयोगज्ञेन कर्त्तव्या नाटके सिद्धिमिच्छतेति" श्लोकेन तत एव रसा भावा इत्यत्र सिद्धिरुद्दिष्टा तत्र केयं सिद्धिर्नामेति भवितव्यमधुना जिज्ञासया तदभिप्रायेणानन्तरवृत्तावध्यायपर्यन्ते दर्शितः ॥

---

1. KSS. सिद्ध्यर्थे संप्रतिष्ठितः ।
2. KSS., वाक्सत्त्व । NS. मानुषी दैविका तथा ।
3. NS. वाङ्मनःकायसंभूता नानाभावरसाश्रया ।

दशांगा मानुषी सिद्धिर्दैवी तु द्विविधा स्मृता[1] ।
नानासत्त्वाश्रयकृता वाङ्नैपथ्यशरीरजा[2] ॥३॥
स्मितापहासिनी हासा साध्वहो कष्टमेव च ।
[3]प्रवद्धनादा च तथा सिद्धिर्ज्ञेयाथ वाङ्मयी ॥४॥
पुलकैश्च सरोमाञ्चैरभ्युत्थानैस्तथैव च ।
चेलदानांगुलिक्षेपैः शारीरी सिद्धिरिष्यते ॥५॥
[4]किञ्चिच्छिष्टो रसो हास्यो नृत्यद्भिर्यत्र[5] युज्यते ।
स्मितेन [6]स प्रतिग्राह्यः प्रेक्षकैर्नित्यमेव च ॥६॥
किञ्चिदस्पष्टहास्यं यत्तथा वचनमेव च ।
[7]अर्थहास्येन तद्ग्राह्यं प्रेक्षकैर्नित्यमेव हि ॥७॥

---

अत ऊर्ध्वं प्रवक्ष्यामि सिद्धीनामपि लक्षणम् ।। इति । तत्र सिद्धिर्नामा-साध्यप्रयोजनसंपत्तिः । सा च नटानां सामाजिकानां च । तत्र कतरा वक्तव्येत्याशंक्याह—

सिद्धीनां तु प्रवक्ष्यामि लक्षणं नाटकाश्रयमिति ।

तुर्व्यतिरेके । यद्यपि सामाजिकाश्रयं नाटकाश्रयं च सिद्धीनां लक्षणं वक्तव्यं तथापि नटाश्रयमेव वक्ष्यामि । नेतरदिति । नाटकोऽत्र नटः नटतीति अपि हि व्युत्पत्तिः । कस्मात्पुनरितरं नोच्यत इत्याशङ्क्याह—

---

1. KSS. दैविकी द्विविधाश्रया ।
2. KSS., NS. शारीरी वाङ्मयी तथा ।
3. NS. स्मितार्धहासा विज्ञेया । KSS., प्रवृद्धनादा च तथा ज्ञेया सिद्धिस्तु वाङ्मयी । NS. प्रवृद्धनादावक्रुष्टा सिद्धिर्ज्ञेया च ।
4. KSS. किंचित् श्लिष्टो ।
5. KSS. यः ।
6. KSS., सुपरिग्राह्यः । NS. संप्रतिग्राह्यः ।
7. NS. अर्धहास्येन ।

विदूषकोच्छेदकृतं भवेच्छिल्पकृतं च यत् ।
अतिहास्येन तद्ग्राह्यं प्रेक्षकैर्नित्यमेव तु ॥८॥
[1]अहोकारस्तथा कार्यो नृणां प्रकृतिसंभवः ।
[2]यद्धर्मपदसंयुक्तं तथातिशयसंभवम् ॥९॥
तत्र साध्विति यद्वाक्यं प्रयोक्तव्यं हि साधकैः ।
विस्मयाविष्टभावेषु[3] प्रहर्षार्थेषु चैव हि ॥१०॥
[4]करुणेऽपि प्रयोक्तव्यं कष्टं शास्त्रकृतेन तु ।
[5]प्रबद्धनादा च तथा विस्मयार्थेषु नित्यशः ॥११॥
साधिक्षेपेषु वाक्येषु प्रस्पन्दिततनूरुहैः ।
[6]कुतूहलोत्तरावेधैर्बहुमानेन साधयेत् ॥१२॥

---

यस्मात्प्रयोगः सर्वोऽयं सिद्धयर्थः संप्रदर्शितः ॥ इति ।

सामाजिकानां सिद्धयर्थो यः प्रयोगः स इति विशेषणभागे विश्रान्तिः । दण्डीप्रेषादस्याह लोहितोष्णीषाः प्रचरन्तीति । यथा विधिविवक्तेः तेनायमर्थः । यथा सिध्यां प्रयोगः सप्रयोजनः सामाजिकगतया तदुद्देशेनैव नाट्योत्पत्तौ न वेदव्यवहारोऽयं संश्राव्यः शूद्रजातिष्वित्यादेशेषु प्रयोगदर्शित्वात् सा सिद्धिः पूर्वं दर्शितैव । तदुपयोगनान्तरीयकतया क्व परा सिद्धिः । अनेनाध्यायेन दर्श्यते । एतदुक्तं भवति । सामाजिकानां तावदभिसंहितफलाप्तिलक्षणा सिद्धिः । व्रीह्या-

---

1. NS. अहंकारस्तदा ।
2. NS. यद्वर्गपदः ।
3. NS. यादिषु भावेषु KSS. येणु भावेषु शृङ्गाराद्भुतविक्रमैः ।
4. NS. करुणेषु KSS. करुणेति प्रयोक्तव्यं सास्त्रं कष्टेति चैव हि ।
5: NS. प्रवृद्धनादः कर्त्तव्यो विस्मयोत्थो हि सर्वदा ।
6. कुतूहलान्तावेद्यं ।

दीप्तप्रदेशं [1]यत्कार्यं छेद्यभेद्याहवात्मकम् ।
[2]सविद्रवमथोत्फुल्लं तथा युद्धनियुद्धजम् ॥१३॥
[3]प्रकम्पितांसशीर्षं च साश्रं सोत्थानमेव च ।
[4]तत्प्रेक्षकैस्तु कुशलैस्साध्यमेवं विधानतः ॥१४॥
एवं साधयितव्यैषा तज्ज्ञैः सिद्धिस्तु मानुषी ।
[5]दैविकीं च [6]पुनः सिद्धिं संप्रवक्ष्यामि तत्त्वतः ॥१५॥
[7]या भावातिशयोपेता [8]सत्त्वयुक्ता तथैव च ।
[9]सा प्रेक्षकैस्तु कर्तव्या दैवी सिद्धिः प्रयोगतः ॥१६॥
न शब्दो यत्र न क्षोभो न चोत्पातनिदर्शनम् ।
सम्पूर्णता च रङ्गस्य [10]दैवी सिद्धिस्तु सा स्मृता ॥१७॥

---

त्मिका व्रीह्यादिष्वधिगच्छन्तीत्यादौ तत्र स्थाने निरूपितपूर्वैव । सा च मानुषेण सामाजिकेनाभिसंहितत्वात्मानुषीत्युच्यते । तत्रापि तया न संहितोऽसौ यथा निर्विषयस्वकपरमानन्दाविर्भावस्वरूपापत्तिवर्गंब्रह्मचारिणी गीतान्दैर्विषयस्य नाट्यान्तरुपरञ्जकतया निमग्नस्य विषयसमत्वान्नटादेः निह्नुतत्वाद्रामादेस्तुच्छत्वाद्देशकालनिर्यन्त्रणतया एव विषयत्वापादनात्तस्याश्चात्र असंभवस्योपादानात् सोऽप्ययं सिद्धयंशो दैवशान्त्याः समस्तरसप्रकृतितां—

---

1. KSS. काव्यं यद ।
2. KSS. सविद्रवमथोत्पातं तथा लघुनियुद्धजम् ।
3. KSS., सकंपितांसकशिरः सास्रं सोच्छ्वासमेव च । NS. प्रकम्पितात्समरसं साश्रमोत्थानमेव च ।
4. KSS. तत्प्रेक्षकैः सकुशलैः ।
5. NS. देवीमपि तथा ।
6. KSS. तथा सिद्धिं कीर्त्यमानां निबोधत ।
7. KSS. सा सत्वातिशया ज्ञेया भावयुक्ता तथैव च ।
8. NS. सत्ययुक्ता ।
9. KSS. नाट्ये संप्रेक्षकैर्ज्ञेया नित्यं सिद्धिस्तु दैविकी ।
10. KSS. NS. सा सिद्धिर्दैविकी स्मृता ।

[1]दैवी च मानुषी चैव सिद्धिरेषा मयोदिता।
अत ऊर्ध्वं प्रवक्ष्यामि घातान्दैवसमुत्थितान् ॥१८॥
दैवात्मपरसमुत्था त्रिविधा घाता बुधैस्तु विज्ञेया[2]।
औत्पातिकश्चतुर्थः कदाचिदथ संभवत्येषु ॥१९॥
वाताग्निवर्षकुञ्जरभुजङ्गमण्डपनिपाताः।
कीटव्यालपिपीलिकपशु[4]प्रवेशनाश्च दैवकृता ॥२०॥
[5][घातानतः परमहं परयुक्तान् संप्रवक्ष्यामि।
वैवर्ण्यं चाचेष्टं विभ्रमितत्वं स्मृतिप्रमोहश्च ॥२१॥
अन्यवचनं च काव्यं तथांगदोषो विहस्तत्वम्।
एते त्वात्मसमुत्था घाता ज्ञेया प्रयोगज्ञैः ॥२२॥]
मात्सर्याद्द्वेषाद्वा तत्पक्षत्वात्तथार्थभेदत्वात्।

---

"स्वं स्वं निमित्तमासाद्य शान्तादुत्पद्यते रसः" इति वदतामुचित एव स्पष्टतयानुरोधो रहस्यार्थस्यान्यपरत्वाच्च शास्त्रस्य। तदुक्तं भट्टनायकेन—

प्रधाने सिद्धिभागेऽस्य प्रयोगाङ्गत्वमागताः।
गेयादयस्तथैवैते त्रैधैनं (?) ह्युपयोगिनः॥
सोपानपदपङ्क्तया च सा च मोक्षस्पृशात्मिका।
सा तु मोक्ता यतो गुह्यमृषयोऽन्यपदे कथम्॥
शास्त्रे प्रकटयेयुर्हि तालमानकृते यथा॥ इति॥

---

1. KSS. एवं सिद्धिस्तु विज्ञेया प्रेक्षकैर्दिव्यमानुषी।
2. KSS. घातका बुधैर्ज्ञेयाः।
3. KSS. कदाचिदपि सम्भवत्येव। NS. कदाचित्कः स विज्ञेयः।
4. KSS. पशुविशननानी दैविका घाताः। NS. पशुवेशनजास्तथैव।
5. KSS. does not read.

एते तु परसमुत्था[1] ज्ञेया घाता बुधैर्नित्यम् ॥२३॥
[2]अतिहसितरुदितविस्फोटितान्यथोत्कृष्टनालिकापाताः ।
गोमयलोष्ट[3]पिपीलिकविक्षेपाश्चारिसंभूताः[4] ॥२४॥
औत्पातिकाश्च घाता मत्तोन्मत्तप्रवेशलिङ्गकृतः[5] ।
पुनरात्मसमुत्था ये घातांस्तांस्तान् प्रवक्ष्यामि[6] ॥२५॥
वैलक्षण्यमचेष्टितविभूमिकत्वं स्मृतिप्रमोषश्च[7] ।
अन्यवचनं च काव्यं तथातंनादो विहस्तत्वम् ॥२६॥
[8]अतिहसितरुदितविस्वरपिपीलिकाकीटपशुविरावाश्च ।
[9]मुकुटाभरणनिपाता पुष्करजाः काव्यदोषाश्च ॥२७॥

---

यस्तु प्रस्फुटो दैवसिद्धयंशः पुरुषार्थव्युत्पत्तिलक्षणः सोऽपि "धर्मो धर्मप्रवृत्तानां कामं कामोपसेविना" मित्यादिना प्रदर्शित एवेति सामाजिकाश्रया सिद्धिर्न वक्तव्या । लक्षणतस्तदाह—सम्यक् प्रकर्षेण प्रकटित इति । नटस्य तु या सम्यक् प्रयोगनिष्पत्तिलक्षणा सिद्धिः सा प्रयोगसिद्धिरुपयोगिनी प्रयोगनिष्पत्या हि विना नाट्यतथैव नेति कुतः सा भवेत्प्रयोगनिष्पत्तिश्च सामान्याभिनयस्यैव सम्यक्तापत्तिः । परमार्थतस्तु परकीयप्रोत्साहनतारतम्योदितप्रकृतिभानप्रत्ययबलेन वा स्वतः प्रतिभानमाहात्म्येन वा तत्र पूर्वा मनुष्यनिष्पादितत्वान्मानुषीत्युच्यते । दृश्यतेऽपि प्रोत्साहनबलेना-

---

1. KSS., NS. एते परप्रयुक्ताः ।
2. KSS., अभिरटितविस्फोटितानि विक्रुष्टतालिकापाताः । NS. अररितवामतविस्फुरितानाथोकुष्टतालिकापाताः ।
3. KSS., NS. तृणोपलविक्षेपा ।
4. KSS. स्युः चात्मसम्भूताः ।
5. KSS. औत्पातिकास्तथा स्युः क्षितिकम्पोलकादिवातनिर्घाताः ।
6. NS. घाताः लक्ष्या बुधैश्चापि ।
7. KSS. प्रमोक्ष्याः स्युः ।
8. KSS. पुनरात्मसमुत्था ये घातास्तापाद्याः ।
9. NS., उभयचरणनिपातः पुष्करवातातदोषाश्च । KSS. मुकुटाभरणप्रपतनपुष्करवाग्भीतदोषाश्च ।

अति[1]हसितरुदितहसितानि [2]सिद्धेर्मात्रस्य दूषकाणि स्युः ।
कीटपिपीलिकपाता सिद्धिं सर्वात्मना घ्नन्ति ॥२८॥
विस्वरमजाततालं वर्णस्वरसंपदा च परिहीणम् ।
अज्ञातस्थानलयं स्वरतगमेवंविधं हन्यात्[3] ॥२९॥
मुकुटाभरणनिपातः प्रवद्धनादश्च नाशनो भवति ।
[4]पशुविशसनं तथा स्याद्बहुवचनघ्नं प्रयोगेषु ॥३०॥
विषमं [5]मानविहीनं विमार्जनं [6]चाकुलप्रहारं च ।
अविभक्तग्रहमोक्षं पुष्करगतमीदृशं हन्ति ॥३१॥
पुनरुक्तो ह्यसमासो विभक्तिभेदो विसन्धयोऽपार्थः ।
त्रैलिंगजश्च दोषः प्रत्यक्षपरोक्षसंमोहाः ॥३२॥

---

प्रवोधो हनूमत एव सागरलंघने । तत्र प्रोत्साहनं वाचिकं । पञ्चधा सा त्वहों कण्ठमित्येकं स्थानं शारीरं पञ्चधेति दशधा । अन्ये तु विभागमाहुः । तथा हि प्रोत्साहनं वचसा वा सात्त्विकदर्शनेन वा शरीरव्यापारेण वा । वचनं सप्तधा । तद्यथा मध्यमारूपतत्प्ररोहात्मकं सामान्यवैखर्यात्मकं तत् प्ररोहात्मकं विशेषशब्दात्मकं वैखरीस्वभावम् । आवेशोचितविशेषवैखरीरूपं तत्प्रवन्धं विच्छेदं च । तदाह । स्मितंह्यन्तःसञ्जल्परूपा मध्यमां सूचयति । संविदो हि हासविकासानुपः सुन्दरस्पन्दो यदाहं वृत्रहणं स्मितेनेति । सात्त्विकं तु पुलकादिरूपमेकं चैव । शरीरविकारोऽपि द्विधा । अनभिसन्धिपूर्वक एव यथा झटिति ह्युत्थानः । अभिसन्धानकृतो वा यथा चेलादिप्रक्षेपं चेलाद्य-

---

1. NS. रटित ।
2. KSS. सिद्धिवादप्रणामकरणानि ।
3. NS. एवंविधन्यायात् ।
4. KSS. विशसनमपि ज्ञेयं वाधाजननं प्रयोगस्य ।
5. NS., KSS. मार्ग ।
6. NS. बहुल KSS. कुलप्रकारं ।

छन्दोवृत्तत्यागो गुरुलाघवसङ्करो यतेर्भेदः[1] ।
एतानि यथा स्थूलं घातस्थानानि काव्यस्य ॥३३॥
ज्ञेयौ तु काव्यजातौ[2] द्वौ घातावप्रतिक्रियौ नित्यम् ।
प्रकृतिव्यसनसमुत्थः शेषोदकनालिकत्वं च ॥३४॥
[3]अप्रतिभागं स्खलनं विस्वरमुच्चारणं च काव्यस्य ।
अस्थानभूषणत्वं पतनं मुकुटस्य विभ्रंशः[4] ॥३५॥
[5]वाजिस्यन्दनकुञ्जरखरोष्ट्रशिबिकाविमानयानानाम् ।
[6]आरोहणावतरणेष्वनभिज्ञत्वं विहस्तत्वम् ॥३६॥
[7]प्रहरणकवचानामत्य[8]यथाग्रहणं विधारणं चापि ।
[9]अमुकुटभूषणयोगश्चिरप्रवेशोऽथवा रङ्गे ॥३७॥
एभिः स्थानविशेषैर्घाता लक्ष्यास्तु सूरिभिः कुशलैः ।
[10]यूपाग्निचयनदर्भस्रग्भाण्डपरिग्रहान्मुक्त्वा ।३८॥

भावे चोर्ध्वांगुलिकरणादिभिस्तेनेयं दशविधा मानुषी सिद्धिः तत्र तत्र प्रयोगौचित्यात्सभेदेन प्रवर्तते । यदाह हास्यं स्मितेनेत्यादि । स्वप्रतिभान-तारतम्यकृता तु सिद्धिर्द्विविधा । कदाचित्तु प्रतिभवन्त्यपि स्वप्नयोगादतीव

1. NS. उत्पातभेदाः ।
2. KSS. युक्तौ ।
3. KSS. अप्रतिभासस्खलितं ।
4. KSS. मुकुटनिपातश्च भूषणग्रहणम् ।
5. NS., व्याप्तिस्पन्दन KSS. भ्रंशं रथनागवाजिकुञ्जर ।
6. KSS. आरोहणवितरणेष्वनभिज्ञातया ।
7. NS. प्रहरणमनेकवचनानम्यग्रहणं ।
8. KSS. यथावद्ग्रहणसाधनं वापि ।
9. NS., अस्फुट·········वाचाङ्गे । KSS. अमुकुट······या रंगे तु-चिरप्रयोगो वा ।
10. NS., रूपाग्निवचनदर्भा KSS. यूपानि चयनदर्भ······।

[1]सिध्या मिश्रो घातस्सर्वगतश्चैकदेशजो वापि ।
[2]नाट्यकुशलैः सलेख्या सिद्धिर्वा स्याद्विघातो वा ॥३९॥
[3]नालेख्यो बहुदिनजः सर्वगतोऽव्यक्तलक्षणविशेषः ।
[4]यस्त्वैकदिवसजातस्स प्रत्यवरोऽपि लेख्यस्स्यात् ॥४०॥
[5]जर्जरमोक्षस्यान्ते सिद्धेर्मोक्षस्तु नालिकायास्तु ।
कर्तव्यस्त्विह सततं [6]नाट्यज्ञैः प्राश्निकैर्विधिना ॥४१॥
[7][दैन्ये दीनत्वमायान्ति ते नाट्ये प्रेक्षकाः स्मृताः ।
ये तुष्टौ तुष्टिमायान्ति शोके शोकं व्रजन्ति च] ॥४२॥

---

मन्दीभवति । तत्संभाव्यमानमध्यात्मिकाधिदैविकानां शरीरादिगता व्याधि-रूपप्रक्षोभबाह्यभूतजनितकलकलशब्दादिभूकम्पवातवर्षादीनां विघ्नानां दैव-परपर्यायादृष्टकृतादृष्टप्रेरितं न पुरुषव्यापारोपनतादपसारणाद्वा भवति । यत्रेदमाह—न शब्दो यत्र न क्षोभ इत्यादि । मूलत एव विघ्नानामसंभवाद्वा न्यदाशयेनाह—यो भावातिशयोपेतेति ।

तदेतदाहुर्यन्मुनिराह सिद्धिस्तु द्विविधा ज्ञेयेति । अत एवास्या रसः प्रत्यङ्गत्वान्नाट्याङ्गमध्ये रसा वा इत्यत्र गुणाङ्गयुक्तं सामाजिकाश्रिता तु फलमाहुः ।

यत्तु भट्टनायकेनोक्तं "सिद्धेरपि नटादेरङ्गत्वं व्रजन्त्यास्तत्पक्षेऽयमिति" तेन नाट्याङ्गता समर्थितफलञ्च पुरुषार्थत्वादिति केवलं जैमिनिरनुसृत

---

1. KSS. सिद्धैर्मिश्रो घातः सर्वगतश्चैकदेशोऽपि ।
2. KSS., नाट्यकुशलेन लेख्या नैव हि सिद्धिर्न घातस्य । NS. सिद्धि-कुशलैः स लेख्यः सिद्धिर्वास्या विघानो वा ।
3. KSS., सिद्धिर्वा घातो वा सर्वगतो व्यक्तलक्षणो बहुशः । NS. नालेख्या वहुदिनतः सर्वगतो यस्तु लक्षणविशेषः ।
4. KSS., NS. यस्त्वेकदेशजातं न प्रत्यवरोहि लेख्यस्तु ।
5. KSS. जर्जरमोक्षस्यान्तर्नालीकसिद्धिश्च लेख्यसिद्धिश्च ।
6. KSS. नाट्येऽस्मिन् प्राश्निकैः सम्यक् ।
7. KSS., NS. read this after the verse 54.

योऽन्यस्य [1]महे मूर्धो नांदीश्लोकं पठेद्धि देवस्य[2] ।
[3]स्ववशेन पूर्वरङ्गं सिद्धेर्घातः प्रयोगस्य[4] ॥४३॥
[5]यो देशभावरहितं भाषाकाव्यं प्रयोजयेद्बुद्ध्या ।
[6]तस्याप्यभिलेख्यः स्याद्[7]घातो देशः प्रयोगज्ञैः ॥४४॥
कः शक्तो नाट्यविधौ यथावदु[8]पपादनं प्रयोगस्य ।
[9]कर्तुं व्यग्रमना वा यथावदुक्तं परिज्ञातम्[10] ॥४५॥
तस्माद्गम्भीरार्थाः शब्दा ये लोकवेदसंसिद्धाः[11] ।
सर्वजनेन ग्राह्यास्ते योज्या नाटके विधिवत् ॥४६॥

---

इत्यलमनेन । वाङ्मनोंऽगसमुद्भवेति सर्वाभिनयैकीकारसंपत्तिरपीत्यर्थः मनो-रूपत्वात् ।

अन्ये तु वाङ्मनोंगसमुद्भवा दशाङ्गा मानुषीति संबन्धयन्ति । तदन्येऽ-प्यभिनयविषयैवेति दर्शितं नानासत्त्वाश्रयकृता वाङ्मय्यथशरीरजेति । विदूषकच्छेदकृतमिति । च्छेदोऽत्र वचनभङ्गी प्रकम्पितस्कन्धना…श्रयोन्छाटनं च कृत्वा तत्साध्यं प्रोत्साहने वृंहितव्यमिति संबन्धः । अथानेन साभ्युत्थानै-

---

1. NS. महेशमूढो ।
2. KSS. मूढस्य ।
3. NS., स्वदसन……प्रयोक्तव्यः । KSS. दैवस्य पूर्वरङ्गो घातस्तस्या विलेख्यः स्यात् ।
4. इतोऽग्रे KSS. पुस्तके 'योऽन्यस्य' इत्यादिश्लोकद्वयमधिकं वर्तते ।
5. NS., योदेशवेषभाषारहितं काव्यं प्रयोजयेद्दुष्टम् । KSS. यो देशवेश-भाषाव्यपेतमपि च प्रयोजयेत्काव्यम् ।
6. KSS. तस्यापि विलेख्यः ।
7. KSS., घातोदेशविधौ तज्ज्ञैः । NS. घातस्तज्ज्ञैरदोषज :।
8. KSS. उपपादने प्रयोगे च ।
9. KSS., धृष्टो । NS. कर्त्तव्यं वाग्रसना ।
10. KSS., NS. परिज्ञातुम् ।
11. NS. ये वेदलोकसंसिद्धाः ।

नच किञ्चिद्गुणहीनं दोषैः [1]परिवर्जितं न चाकिंचित् ।
तस्मान्नाट्यप्रकृतौ दोषा नाट्यार्थतो ग्राह्याः ॥४७॥
[2]न च नादरस्तु कार्यो नटेन [3]वागङ्गसत्त्वनेपथ्ये ।
[4]रसभावयोश्च गीतेष्वातोद्ये लोकयुक्त्यां च ॥४८॥
एवमेतत्तु विज्ञेयं सिद्धीनां लक्षण बुधैः ।
अत ऊर्ध्वं प्रवक्ष्यामि [5]प्राश्निकानां तु लक्षणम् ॥४९॥
[6]चारित्राभिजनोपेताः [7]शान्तवृत्ताः कृतश्रमाः ।
यशोधर्मपराश्चैव मध्यस्थवयसान्विताः ॥५०॥
षडङ्गनाट्यकुशलाः [8]प्रबुद्धाः शुचयः समाः ।
चतुरातोद्यकुशला [9]वृत्तज्ञास्तत्त्वदर्शिनः ॥५१॥
देशभाषाविधानज्ञाः कलाशिल्पप्रयोजकाः[10] ।
[11]चतुर्धाभिनयोपेता रसभावविकल्पकाः ॥५२॥

रिति नवमो भेदो व्याख्यातः । प्रकम्पितांसशीर्षमित्यनेन वचनाङ्गुलि-क्षेपात् दशमोऽपि भवेदस्पृष्टो मन्तव्यः । सास्रमिति वदन्नेवं सूचयन्ति ।

---

1. NS. पाठैरवर्जितं ।
2. KSS. नानादरस्तु ।
3. KSS. गौणवागङ्गनेपथ्यैः ।
4. KSS., रसभावनृत्तगीतैरातोद्यैर्लोकयुक्त्या तु । NS. रसभाव-गीतनृत्ये······।
5. KSS. प्रेक्षणानां तु ।
6. NS. चारित्र्याभिनयोपेता ।
7. NS., श्रान्तवृत्तश्रुतान्विता KSS. शान्तिवृत्त······।
8. NS. अलुब्धाः ।
9. KSS. नेपथ्यज्ञाः सुधार्मिका ।
10. KSS. विचक्षणाः ।
11. KSS., चतुराभिनयज्ञाश्च सूक्ष्मज्ञा रसभावयोः । NS. चतुर्धा-भिनयज्ञाः·········।

शब्दच्छन्दोविधानज्ञा नानाशास्त्रविचक्षणाः ।
एवं विधास्तु कर्तव्याः [1]प्राश्निका दशरूपके ॥५३॥
अव्यग्रैरिन्द्रियैः शुद्ध ऊहापोहविशारदः ।
त्यक्तदोषोऽनुरागी च स नाट्ये प्रेक्षकः स्मृतः ॥५४॥
[2]न चैवैते गुणाः सम्यक् सर्वस्मिन् प्रेक्षके स्मृताः ।
विज्ञेयस्याप्रमेयत्वात्संकीर्णानां च पर्षदि ॥५५॥
[3]यद्यस्य शिल्पं नेपथ्यं कर्मचेष्टितमेव वा ।
तत्तथा तेन कार्यं तु स्वकर्मविषयं प्रति ॥५६॥
नानाशीलाः प्रकृतयः शीले नाट्यं विनिर्मितम् ।
उत्तमाधममध्यानां वृद्धबालिशयोषिताम् ॥५७॥
तुष्यन्ति तरुणाः कामे विदग्धाः समयान्विते ।
अर्थेष्वर्थपराश्चैव मोक्षे चाथ विरागिणः ॥५८॥
शूरास्तु वीररौद्रेषु नियुद्धेष्वाहवेषु च ।
धर्माख्याने पुराणेषु वृद्धास्तुष्यन्ति नित्यशः ॥५९॥
न शक्यमधमैर्ज्ञातुमुत्तमानां विचेष्टितम् ।
तत्त्वभावेषु सर्वेषु तुष्यन्ति सततं बुधाः ॥६०॥

---

यद्यपि भेदान्तरमप्यत्रानुप्रविष्टं तथापि बाहुल्यादभ्युत्थानेन व्यपदेश इति । एवं भेदात्क्रियते । द्वेषः सहजैवाप्रीतिर्मात्सर्यं तु कार्यार्थमेकद्रव्याभिलाषात् । पिपीलिकानिक्षेपः सुकुमारप्रकृतेः स्त्रीपात्रप्रायस्य त्रासनोत्पानेन सिद्धिविघातः "औत्पातिकाश्च घाताः पशुवेगोन्मत्तलिङ्गकृता इति । अशंकितं

---

1. KSS. प्रेक्षकाः नाट्यदर्शने ।
2. NS., नवैवेते गुणाः सर्वे एकस्मिन् । KSS. न चैते गुणा सर्वं एकस्मिन् ।
3. इतोऽग्रे षष्ठश्लोकेषु पाठक्रमः पाठभेदश्च सर्वथा भिद्यते ।

बाला मूर्खाः स्त्रियश्चैव हास्यनैपथ्ययोः सदा ।
यस्तुष्टो तुष्टिमायाति शोके शोकमुपैति च ॥६१॥
क्रुद्धः क्रोधे भये भीतः स श्रेष्ठः प्रेक्षकः स्मृतः ।
एवं भावानुकरणे[1] यो यस्मिन् प्रविशेन्नरः ॥६२॥
[2]स तत्र प्रेक्षको ज्ञेयो गुणैरेभिरलंकृतः ।
एवं हि प्रेक्षका ज्ञेयाः प्रयोगे दशरूपतः[3] ॥६३॥
संघर्षे तु समुत्पन्ने प्राश्निकान् संनिबोधत ।
यज्ञविन्नर्तकश्चैव छन्दोविच्छब्दवित्तथा ॥६४॥
[4]अस्त्रविचित्रकृद्वेश्या गान्धर्वो राजसेवकः ।
[5]यज्ञविद्यज्ञयोगे तु नर्तकोऽभिनये स्मृतः ॥६५॥
छन्दोविद्वृत्तबन्धेषु शब्दवित्पाठ्यविस्तरे ।
[6]इष्वस्त्रवित्सौष्ठवे तु नेपथ्ये चैव चित्रकृत् ॥६६॥
कामोपचारे वेश्या च गान्धर्वः स्वरकर्मणि[7] ।
सेवकस्तूपचारे स्यादेते वै प्राश्निकाः स्मृताः ॥६७॥

---

पशोः सिंहादेर्वेषं कृत्वा सुकुमारं प्रयोक्तारं भीषयति सामाजिकं वा । एवं मात्सर्यादुन्मत्तलिङ्गमपि कश्चित्करोति हासानयनेन प्रकृतप्रयोगविप्रसंवादनायेति वैलक्षण्ये लक्षणविस्मरणमन्यभूमिकोचितसत्त्वस्वीकारोऽपि विभूमिकस्तूष्णीकता । अन्येन पठनीयमन्यः पठतीत्यन्यवचनं काव्यमिति बहुव्रीहिः (२२) । आर्तनाद इति । इतः प्रभृति परद्वेषप्रयुक्ताः सिद्धिविघाताः । आर्तत्वं हि छद्मना प्रदर्श्य नादं सिद्धिविघातकं करोति । एवं व्याधिदर्शनेन मकुटाभरण-

1. KSS. करणैः ।
2. KSS. प्रेक्षकस्तु स मन्तव्यो ।
3. KSS. नाट्यसंश्रये ।
4. KSS. इष्वस्यचित्रविद्वेश्या ।
5. NS. does not read. यज्ञविद्·········शुद्धभावैश्च ।
6. KSS. पुस्तके पद्यार्धस्थाने 'विभूतिगुणा' इत्यादि श्लोकद्वयमधिकम् ।
7. KSS. गान्धर्वस्वरतालयोः ।

[1]एभिर्दृष्टान्तसंयुक्तैर्दोषा वाच्यास्तथा गुणाः ।
[2]अशास्त्रज्ञा विवादेषु यथा प्रकृतिकर्मतः ॥६८॥
अथैते प्राश्निका ज्ञेयाः कथिता ये मयानघाः ।
[3]शास्त्रज्ञानाद्यदा तु स्यात्संघर्षः शास्त्रसंश्रयः ॥६९॥
शास्त्रप्रमाणनिर्माणैर्व्यवहारो भवेत्तदा ।
[4]भर्तृनियोगादन्योऽन्यविग्रहात्स्पर्धयापि भरतानाम् ॥७०॥
अर्थपताका हेतोस्संघर्षो नाम संभवति ।
[5]तेषां कार्यं व्यवहारदर्शनं पक्षपातविरहेण ।७१॥
कृत्वा पणं पताकां व्यवहारः स भवितव्यस्तु[7] ।
[8]सर्वैरनन्यमतिभिः सुखोपविष्टैश्च शुद्धभावैश्च ॥७२॥
यैर्लेखकगभकसहायास्सह सिद्धिभिर्घाताः ।
नात्यासन्नैर्नदूरसंस्थितैः प्रेक्षकैस्तु भवितव्यम् ॥७३॥
तेषामासनयोगो द्वादशहस्तस्थितः कार्यः ।
यानि विहितानि पूर्वं सिद्धिस्थानानि तानि लक्ष्याणि ॥७४॥

---

निपात इति (२७) नेपथ्यभ्रंशः । अन्यः पुष्करावाहितदोषा इत्यनेनेदमाह न केवलमभिनयानामेव समानीकरणं सामान्याभिनयानां यावदातोद्यगीतयोरप्यन्योन्यमभिनयैश्च समं मीलनं सोऽपि सामान्याभिनयः । अन्यदिति । गीतादि । तच्चाभिनयाश्चेति द्वन्द्वः । समशब्देन कर्मधारयः तत्र भवः प्रयोग इति ।

---

1. KSS. एभिधर्ममभिप्रेक्ष्य ।
2. KSS. अशास्त्रज्ञे विवादो हि यदा भवति कर्मतः ।
3. KSS. शास्त्रज्ञाने ।
4. KSS. निर्माणो ।
5. KSS. स्वाभि (मि ?).........।
6. KSS. तेषां व्यवहारगतावपक्षपातेन दर्शनं कार्यम् ।
7. KSS. सव्यवहारं गमयितव्यम् ।
8. KSS. तैः सम्भावितमतिभिः ।

*घाताश्च लक्षणीयाः प्रयोगतो नाट्ययोगे तु[1] ।
[2]दैवाद्घातसमुत्थाः परोत्थिता वा बुधैर्नवैर्लेख्याः ॥७५॥
घाता नाट्यसमुत्था ह्यात्मसमुत्थास्तु लेख्याः स्युः ।
घाता यस्य स्वल्पाः संख्याताः सिद्धयश्च बहुलाः स्युः ॥७६॥
विदितं कृत्वा राज्ञस्तस्मै देया पताका हि ।
सिध्यतिशयात्पताका समसिद्धौ पार्थिवाज्ञया देया ॥७७॥
अथ नरपतिः समः स्यादुभयोरपि सा तदा देया[3] ।
एवं विधिज्ञैर्यष्टव्यो व्यवहारः समञ्जसाम् ॥७८॥
स्वस्थचित्तसुखासीनैः सुविशिष्टैर्गुणार्थिभिः ।
विमृश्य प्रेक्षकैर्ग्राह्यं सर्वरागपराङ्मुखैः ॥७९॥
साधनं दूषणाभासः प्रयोगसमयाश्रितैः ।
समत्वमङ्गमाधुर्यं पाठ्यं प्रकृतयो रसाः ॥८०॥

---

नन्वञ्जितादिभिः को दोषो जायते इत्याह । भावस्य प्रयोगस्यानुभावादिरूपस्य दूषणानि तेषु सत्सु तदवस्थावचनात् तत्र सर्वात्मने रसादिदोषाः । प्रथमेऽध्यायेऽत्राह—

त्रासं सञ्जनयन्ति स्म शेषा विघ्नास्तु नृत्यताम् ।

इति तत्र स एव सिद्धिविघाते प्रधानतमत्वेनोक्तः । विस्वरमजाततालमित्येव स्पष्टीकृतं वर्णेत्यादिना । एतत्स्वरूपं च वितत्य गेयाधिकारे निरूपयिष्याम इतीह नोक्तम् । एवं विधं स्वरगतं कर्तृ हन्याद्विहन्ति प्रयोगं नाशयन्तीत्यर्थः । एवं पुष्करगतं कर्तृ नियोज्यं विधिप्रयोगं हन्तीत्यकाव्यकृतघातस्य स्थानानिः निमित्तानीत्यर्थः । काव्यजातामिति सप्तमी । प्रकृतिव्यसनेति । प्रकृतकृतमनौचित्यमिति यावत् ।

---

1. NS. वेदेषु ।
2. NS. दैवोत्पातसमुत्थास्तथा परोत्था ।
3. NS. ज्ञेया ।

* अतः परं श्लोकसप्तसु काशीमुद्रित पुस्तके सर्वथैव पाठो भिद्यते अतस्तत्र पाठान्तरं तस्मान्न प्रदर्शितः ।

वाद्यं गानं सनेपथ्यमेतज्ज्ञेयं प्रयत्नतः ।
गीतवादित्रतालेन कलान्तरकलासु च ॥८१॥
यदङ्गं क्रियते नाट्यं समन्तात् सममुच्यते ।
अङ्गोपाङ्गसमायुक्तं[1] गीततालयान्वितम् ॥८२॥
[2]गानवाद्यसमत्वं च तद्बुधैः सममुच्यते ।
सनिर्भुग्नमुरः कृत्वा [3]चतुरश्रकृतौ करौ ॥८३॥
ग्रीवाञ्चिता तथा कार्या त्वङ्गमाधुर्यमेव च ।
पूर्वोक्तानीह शेषाणि यानि [4]द्रव्याणि साधकैः ॥८४॥
[5]वाद्यादीनां पुनर्विप्रा लक्षणं सन्निबोधत ।
[6]वाद्यप्रभृतयो गानं वाद्यमाणानि निर्दिशेत् ॥८५॥
यानि स्थानानि सिद्धीनां तैः सिद्धिं तु प्रकाशयेत् ।
हर्षादङ्गसमुद्भूतां नानारससमुत्थिताम् ॥८६॥

---

तदुक्तम्—

अनौचित्यावृते नान्यद्रसभङ्गस्य कारणम् ॥ इति ।

शेषोदकनालिकया काल उपलक्ष्यते । तस्य शेषत्वमन्यकालव्याप्तियोग्यता तेन यत्र काले यदनुचितं तत्र तन्निबन्धनं । यथा प्रभाते सङ्गीतकदर्शनादि राज्ञः । चकारादेशादौचित्यमपि । तेन देशकालस्वभावकृतं यदनौचित्यं कार्ये तत्सर्वमेव सिद्धिविघातकमिति । उत्तमव्यतिक्रियामीति । स्थानविशेषैरिति । स्थान-विशेषैरिति निमित्तैरित्यर्थः । यूपाग्निपावनेति । तच्छिछद्रात् नटो दुर्लभश्च तत्र यथात्वं सर्वजनेन सुज्ञातं न च लोकवृत्तोपयोगिनीति भावः । सर्वगत इति । सर्वत्र प्रयोग एकदेशज इत्यंशे बहुदिनजा······वरुद्धत्यसौ सिद्धिविघातकः । अव्यक्त इति । प्रयोगान्तेऽस्य प्रयोगान्तरेण संबन्धो रङ्गे कार्य इत्यर्थः ।

---

1. NS. समायोगं ।
2. KSS., NS. भाण्डवाद्यं समं चैव यस्मिस्तत्सममुच्यते ।
3. KSS. चतुरश्रयितौ भुजौ ।
4. KSS. साध्यानि NS. प्रेक्ष्याणि ।
5. KSS. NS. do not read.
6. NS. वाद्यं प्रकृतयो गानं वक्ष्यमाणं विनिर्दिशेत् (KSS. वाद्यप्रकृतयो-ऽङ्गानां) :

[1]वारकालास्तु विज्ञेया नाट्यज्ञैर्विविधाश्रयाः ।
दिवसश्चैव रात्रिश्च [2]तयोर्वारान् निबोधत ॥८७॥
[3][पूर्वाह्णस्त्वथ मध्याह्नस्त्वपराह्णस्तथैव च ।
दिवा समुत्था विज्ञेया नाट्यवाराः प्रयोगतः] ॥८८॥
[4]प्रादोषिकार्धरात्रिश्च तथा प्राभातिकोऽपरः ।
नाट्यवारा भवन्त्येते रात्रावित्यनुपूर्वशः[5] ॥८९॥
एतेषां [6]यत्र यद्योज्यं नाट्यकार्यं रसाश्रयम् ।
तदहं संप्रवक्ष्यामि वारकालसमाश्रयम्[7] ॥९०॥

---

एकदिवसजात इति । एकप्रयोगो लक्षणं प्रत्यपर इत्यन्वेति । जर्जरमोज्ञस्यान्त इति पूर्वरङ्गप्रयोगोऽपि परीक्ष्य इति दर्शयति । नाट्यविधौ यथावदुक्तं ज्ञातुं प्रयोगस्य चोपपादनं कर्तुमशक्तोऽपि व्यग्रमनस्कत्वात् देशवेषाद्यनौचित्येन यो यं प्रयोगं कुर्यात्तस्य सर्वस्य घाताः । नन्वज्ञस्यैवेत्यार्याद्वयस्य योजना दोषप्रत्यर्थं न ग्नाह्य इत्युक्ते प्रयोक्तुरवलेपोऽवतरेदित्याशयेनाह न च नादस्त्विति । तज्ज्ञै-रित्युक्तम् । तान् वशीकर्तुमाह अतः उर्ध्वं प्रवक्ष्यामि प्राश्निकानां त्विति । प्रश्ने भवा प्रध्यस्थत्वेनाभिनयचतुष्कगीतातोद्ये चेति । षडङ्गत्वान्नाट्यं सन्तोष इत्यादिना विमलाशयत्वेन सहृदयत्वमेषां परमो गुण इति दर्शयिति कार्यमिति । तेन सह विचार्यमित्यर्थः । शीलमेव दर्शयति । तुष्यन्ति तरुणाः काम इत्यादिना । प्रविशेदिति साधारणीभावमेवं सूचयनि तत्समीपे भवेदिति यावत् । एवं वस्तु-मात्रविचारे विधिरुक्तः । प्रयोध्क्तृणां परस्परकलहहेतुविधिर्वक्तव्यः । स च कदाचिल्लक्ष्यमात्रविषयो भवति । कदाचिल्लक्षणविषयोऽपि पूर्वमधिकृत्याह ।

---

1. KSS. पदकालश्च विज्ञेयो विविधो नाट्ययोक्तृभिः ।
2. KSS. विशेषाश्चानयोः स्मृताः ।
3. KSS. does not read.
4. NS. प्रदोषिकाऽर्धरात्रं । KSS. प्रादोषिकोऽर्धरात्रं च तथा प्राभाति-कोऽपि च ।
5. KSS. रात्रगर्भसमाश्रिताः NS. रात्रिजा ह्यनुपूर्वशः । अतः परं काशीसिरीजपुस्तके "पौर्वाह्णिकस्तथे"त्यादि पद्यमधिकम् ।
6. KSS. तु यथायोग्यं ।
7. KSS. वारं कालसमुत्थितम् ।

यच्छ्रोत्ररमणीयं स्या[1]द्धर्मोत्थानकृतं च यत् ।
[2]पूर्वाह्णे तत्प्रयोक्तव्यं शुद्धं वा विकृतं तथा ॥९१॥
सत्त्वोत्थानगुणैर्युक्तं वाद्यभूयिष्ठमेव च ।
पुष्कलं [3]सत्त्वयुक्तं च अपराह्णे प्रयोजयेत् ॥९२॥
कैशिकीवृत्तिसंयुक्तं शृङ्गाररससंश्रयम् ।
नृत्तवादित्रगीताढ्यं प्रदोषे नाट्यमिष्यते ॥९३॥
[4]यन्नर्महास्यबहुलं करुणप्रायमेव च ।
प्रभातकाले तत्कार्यं नाट्यं निद्राविनाशनम् ॥९४॥
[5]अर्धरात्रे नियुञ्जीत समध्याह्ने तथैव च ।
सन्ध्याभोजनकाले च नाट्यं नैव प्रयोजयेत्[6] ॥९५॥
एवं कालं च देशं [7]समीक्ष्य च बलाबलम् ।
[8]नित्यं नाट्यं प्रयुञ्जीत यथाभावं यथारसम् ॥९६॥

संघर्षेत्विति । उपचार इति । राजोचित इति भावः । द्वितीयमधिकृत्याह शास्त्रज्ञानात्त्विति । भर्तृनियोगादिति । लेखको लिखति गणकः पिण्डयति । द्वयोरपि यथैकस्य न घातः तेनायमस्याधिकारसिद्धिः । स चेत्याह सिद्ध्यति-शयात्पताकेति । यदि तु न कुत्रचिदातिशयः । तदा कथमित्याह । इति शब्दोऽध्याहार्यः । तत्तद्रसप्रधानं नाट्यं तत्र तत्र कालेषु रसः संभवतीत्यभिप्रायेणाह

1. KSS. धर्माख्यानकृतं तथा ।
2. KSS. तत्पूर्वाह्णे बुधैः कार्यं शुद्धं तु ।
3. NS. सत्वसंयुक्तं KSS. सिद्धियुक्तं तु ।
4. KSS., NS. यत्तु (यत्र) माहात्म्यसंयुक्तं ।
5. NS. न प्रयुञ्जीत मध्याह्ने नार्धरात्रे कथंचन । KSS. अर्धरात्रे न युञ्जीत न मध्याह्ने तथैव च ।
6. NS. न नाट्यं सम्प्रयोजयेत् KSS. नाट्यं न च कदाचन ।
7. KSS. 'वर्णनं च' इति भवेत् । प्रसमीक्ष्य ससंश्रयम् । NS. पर्णदं च समीक्ष्य तु ।
8. KSS. नाट्यवारं प्रयुञ्जीत ।

अथवा देशकालौ च न परीक्ष्यौ प्रयोक्तृभिः[1] ।
[2]यथैवाज्ञापयेद्भर्ता तदा योज्यमसंशयम् ॥९७॥
[3]तथा समुदिताश्चैव विज्ञेया नाटकाश्रिताः ।
पात्रं प्रयोगमृद्धिश्च विज्ञेयास्तु त्रयो गुणाः ॥९८॥
[4]बुद्धिमत्त्वं सुरूपत्वं लयतालज्ञता तथा ।
रसभावज्ञता चैव वयस्थ[5]त्वं कुतूहलम् ॥९९॥
ग्रहणं धारणं चैव [6]गात्रावैकल्यमेव च ।
निजसाध्वसतोत्साह इति पात्रगतो विधिः ॥१००॥
सुवाद्यता सुगानत्वं सुपाठ्यत्वं तथैव च ।
शास्त्रकर्मसमायोगः प्रयोग इति संज्ञितः[8] ॥१०१॥
[9]शुचिभूषणतायां तु माल्याभरणवाससाम् ।
[10]विचित्ररचना चैव समृद्धिरिति संज्ञिता ॥१०२॥
यदा [11]समुदिताः सर्वे एकीभूता भवन्ति हि ।
अलङ्कारा: [12]सकुतपा मन्तव्यो नाटकाश्रयाः ॥१०३॥

---

देशकालाविति । नेपथ्ये पाठः यत्कर्तुं जानाति तेन योग इति पात्रसंपाद्य-न्तर्भावोऽस्य । पात्रं हि रसप्रविष्टमेव । यदा समुदिता इति सामान्याभिनय-त्वमाह । अध्यायपञ्चकेन हि तदेवोक्तम् । नाट्योत्पत्तिरिव पूर्वरङ्गान्तेनेत्युक्तम् ।

---

1. KSS. कदाचन ।
2. NS. यदा । KSS. यत्र च ।
3. KSS. यथा समुदयश्चैव प्रयोगाश्च समृद्धयः ।
4. KSS. बुद्धिसत्त्वस्वरूपं च । NS. बुद्धिः सत्त्वं सुरूपत्वं ।
5. NS. स्वत्वकुतहूलम् ।
6. KSS. गानं नाट्यक्कतं तथा ।
7. KSS. जितसाध्वसतोत्साहाविति । NS. जितसाध्वसतोत्साह ।
8. NS. सम्प्रकीर्तितः KSS. स तु संज्ञितः ।
9. KSS., NS. सुविभूषणता या तु सुमाल्याम्बरता तथा ।
10. KSS. यात्वङ्गरचना चैव NS. विचित्रा रचना चैव······स्मृता ।
11. KSS. सर्वे सुमुदिता । NS. समुदयाः सर्वे ।
12. NS. स तु तदा KSS. स तु तदा मन्तव्यो नाट्ययोक्तृभिः ।

[1]एतदुक्तं द्विजश्रेष्ठाः सिद्धीनां लक्षणं मया ।
अत ऊर्ध्वं प्रवक्ष्याम्यातोद्यानां च विकल्पनम्[2] ॥१०४॥

इति भरतीये नाट्यशास्त्रे सिद्धिव्यञ्जको नाम
सप्तविंशोऽध्यायः

---

वक्ष्यति च अलङ्कार इति शोभापूर्णतायाश्चतुरित्यर्थः ।
वक्तव्यशेषं सूचयति अत ऊर्ध्वमित्यादि । शिवम् ॥

नृसिंहगुप्तापरनामधेय-
विद्यावदातः सुखलाभिधानः ।
यं देहविद्यभिरयूयुजत्सः
प्रयोगसिद्धि कृतवान् महार्थाम् ॥

इति श्रीकाश्मीरमहामाहेश्वराचार्याभिनवगुप्ताचार्यविरचितायां
अभिनवभारत्यां नाट्यवेदवृत्तौ सिद्धयध्यायः सप्तविंशः ॥

— ० —

1. KSS. एतदुक्तं मया सम्यक् सिद्धीनां लक्षणं द्विजाः ।
2. KSS. ह्यातोद्यानां विकल्पनम् ।

# INDEX OF HALF VERSES OF THE NATYASASTRA

